॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

भीमोपिवेगादवतीर्ययानाद्दुःशासनंवेगवानभ्यधावत् ॥ ततःस्मृत्वाभीमसेनस्तरस्वीसापत्नकंयत्प्रयुक्तंसुतैस्ते ॥ १३ ॥ तस्मिन्सुघोरेतुमुलेवर्तमानेप्रधानभू
यिष्ठतरैःसमंतात् ॥ दुःशासनंतत्रसमीक्ष्यराजन्भीमोमहाबाहुरचिंत्यकर्मा ॥ १४ ॥ स्मृत्वाथकेशग्रहणंचदेव्यावस्त्रापहारंचरजस्वलायाः ॥ अनागसोभर्तृप
राङ्मुखायाद्दुःखानिदत्तान्यपिविप्रचिंत्य ॥ १५ ॥ जज्वालक्रोधादथभीमसेनआज्यप्रसिक्तोहियथाहुताशः ॥ तत्राहकर्णंचसुयोधनंचकृपंद्रौणिंकृतवर्माण
मेव ॥ १६ ॥ निहन्मिदुःशासनमद्यपापंसंरक्ष्यतामद्यसमस्तयोधाः ॥ इत्येवमुक्त्वासहसाभ्यधावन्निहंतुकामोतिबलस्तरस्वी ॥ १७ ॥ तथातुविक्रम्यरणेवृकोद
रोमहागजंकेसरिकोयथैव ॥ निगृह्यदुःशासनमेकवीरःसुयोधनस्याधिरथेःसमक्षम् ॥ १८ ॥ रथादवप्लुत्यगतःसभूमौयत्नेनतस्मिन्प्रणिधायचक्षुः ॥ असिंसमु
द्यम्यसितंसुधारंकंठेपदाक्रम्यचवेपमानम् ॥ १९ ॥ उवाचतद्गौरितियद्ब्रुवाणोहृष्टोवदेःकर्णसुयोधनाभ्याम् ॥ येराजसूयावभृथेपवित्राजाताःकचायाज्ञसेन्यादु
रात्मन् ॥ २० ॥ तेपाणिनाकतरेणावकृष्टास्तद्ब्रूहित्वांपृच्छतिभीमसेनः ॥ श्रुत्वातुतद्भीमवचःसुघोरंदुःशासनोभीमसेनंनिरीक्ष्य ॥ २१ ॥ जज्वालभीमंसतदा
स्म[illegible]येनसंशृण्वतांकौरवसोमकानाम् ॥ उक्तस्तदाजौसतथासरोषंजगादभीमंपरिवर्तनेत्रः ॥ २२ ॥ अयंकरिकराकारःपीनस्तनविमर्दनः ॥ गोसहस्रप्रदाताचक्ष
त्रियांतकरःकरः ॥ २३ ॥ अनेनयाज्ञसेन्यामेभीमकेशाविकर्षिताः ॥ पश्यताकुरुमुख्यानांयुष्माकंचसभासदाम् ॥ २४ ॥ एवंत्वसौराजसुतंनिशम्यब्रुवंतमा
जौविनिपीड्यवक्षः ॥ भीमोबलात्तंप्रतिगृह्यदोर्भ्यामुच्चैर्ननादाथसमस्तयोधान् ॥ २५ ॥ उवाचयस्यास्तिबलंसरक्षत्वसौभवेदद्यनिरस्तबाहुः ॥ दुःशासनंजी
वितंप्रोत्सृजंतमाक्षिप्ययोधांस्तरसामहाबलः ॥ २६ ॥ एवंक्रुद्धोभीमसेनःकरेणउत्पाटयामासभुजंमहात्मा ॥ दुःशासनंतेनसवीरमध्येजघानवज्राशनिसं
निभेन ॥ २७ ॥ उत्कृत्यवक्षःपतितस्यभूमावथापिबच्छोणितमस्यकोष्णम् ॥ ततोनिपात्यास्यशिरोपकृत्यतेनासिनातवपुत्रस्यराजन् ॥ २८ ॥ सत्यांचिकीर्षु
र्मतिमान्प्रतिज्ञांभीमोपिबच्छोणितमस्यकोष्णम् ॥ आस्वाद्यचास्वाद्यचवीक्षमाणःक्रुद्धोहिचैनंनिजगादवाक्यम् ॥ २९ ॥ स्तन्यस्यमातुर्मधुसर्पिषोर्वामाध्वी
कपानस्यचसत्कृतस्य ॥ दिव्यस्यवातोयरसस्यपानात्पयोदधिभ्यांमथिताच्चमुख्यात् ॥ ३० ॥ अन्यानिपानानिचयानिलोकेसुधामृतस्वादुरसानितेभ्यः ॥ सर्वेभ्य
एवाभ्यधिकोरसोयंममाद्यचास्याहितलोहितस्य ॥ ३१ ॥

॥३२॥३३॥३४॥३५॥३६॥३७॥३८॥३९॥४०॥४१॥४२॥४३॥४४॥४५॥४६॥४७॥४८॥४९॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ इतिकर्णपर्वणिनैलकंठीयेभारतभावदीपेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥

अथाहभीमःपुनरुग्रकर्मादुःशासनंक्रोधपरीतचेताः ॥ गतासुमालोक्यविहस्यसुस्वरंकिंवाकुर्यांमृत्युनारक्षितोसि ॥ ३२ ॥ एवंब्रुवाणंपुनराद्रवंतमास्वाद्यमानं तमतिप्रहृष्टम् ॥ येभीमसेनंददृशुस्तदानींभयेनतेपिव्यथितानिपेतुः॥३३॥ येचापिनासन्व्यथितामनुष्यास्तेषांकरेभ्यःपतितंहिशस्त्रम्॥ भयाच्चसंचुक्रुशुरस्वरैस्ते निमीलिताक्षाददृशुःसमंततः॥३४॥ तंतत्रभीमंददृशुःसमंताद्दौःशासनंतद्रुधिरंपिबंतम्॥ सर्वेपलायंतभयाभिपन्नानवैमनुष्योयमितिब्रुवाणाः ॥ ३५॥ तस्मि न्कृतेभीमसेनेनरूपेदृष्ट्वाजनाःशोणितंपीयमानम्॥ संप्राद्रवंश्चित्रसेनेनसार्धंभीमंरक्षोभाषमाणाभयार्ताः॥ ३६ ॥ युधामन्युःप्रद्रुतंचित्रसेनंसहानीकस्त्वभ्य याद्राजपुत्रः॥ विव्याधचैनंनिशितैःपृषत्कैर्व्यपेतभीःसप्तभिराशुमुक्तैः ॥ ३७॥ संक्रांतभोगइवलेलिहानोमहोरगःक्रोधविषंसिसृक्षुः॥ निवृत्त्यपांचालजमभ्य विध्यत्रिभिःशरैःसारथिमस्यषड्भिः ॥ ३८ ॥ ततःसुपुंखेनसुयंत्रितेनसुसंशिताग्रेणशरेणशूरः॥ आकर्णमुक्तेनसमाहितेनयुधामन्युस्तस्यशिरोजहार॥ ३९॥ तस्मिन्हतेभ्रातरिचित्रसेनेक्रुद्धःकर्णःपौरुषंदर्शयानः ॥ व्यद्रावयत्पांडवानामनीकंप्रत्युद्यातोनकुलेनामितौजाः ॥ ४० ॥भीमोपिहत्वातत्रैवदुःशासनममर्ष णम्॥ पूरयित्वांजलिंभूयोरुधिरस्योग्रनिःस्वनः॥ ४१ ॥ शृण्वतांलोकवीराणामिदंवचनमब्रवीत् ॥ एषतेरुधिरंकंठात्पिबामिपुरुषाधम ॥ ४२ ॥ ब्रूहीदानींतुसं हृष्टःपुनर्गौरितिगौरिति॥ येतदास्मान्प्रनृत्यंतिपुनर्गौरितिगौरिति ॥ ४३ ॥ तान्वयंप्रतिनृत्यामःपुनर्गौरितिगौरिति॥ प्रमाणकोट्यांशयनंकालकूटस्यभोजनम् ॥ ४४॥ दंशनंचाहिभिःकृष्णैर्दाहंचजतुवेश्मनि॥ द्यूतेनराज्यहरणमरण्येवसतिश्चया॥ ४५॥ द्रौपद्याःकेशपक्षस्यग्रहणंचसुदारुणम्॥ इष्वस्त्राणिचसंग्रामेष्व सुखानिचवेश्मनि ॥ ४६ ॥ विराटभवनेयश्चक्लेशोस्माकंपृथग्विधः ॥ शकुनेर्धार्तराष्ट्रस्यराधेयस्यचमंत्रिते ॥ ४७ ॥ अनुभूतानिदुःखानितेषांहेतुस्त्वमेवहि ॥ दुःखान्येतानिजानीमोनसुखानिकदाचन॥ धृतराष्ट्रस्यदौरात्म्यात्सपुत्रस्यसदावयम्॥ ४८॥ इत्युक्त्वावचनंराजन्जयंप्राप्यवृकोदरः॥ पुनराहमहाराजस्मयं स्तौकेशवार्जुनौ॥ ४९ ॥ अस्तृग्दिग्धोविस्रवल्लोहितास्यःक्रुद्धोत्यर्थंभीमसेनस्तरस्वी ॥ दुःशासनेयद्रणेसंश्रुतंमेतद्वैसत्यंकृतमद्येहवीरौ॥ ५० ॥ अत्रैवदास्याम्य परंद्वितीयंदुर्योधनंयज्ञपशुंविशस्य ॥ शिरोमृदित्वाचपदादुरात्मनःशांतिंलप्स्येकौरवाणांसमक्षम्॥ ५१ ॥ एतावदुक्त्वावचनंप्रहृष्टोननादचोच्चैरुधिरार्द्रगात्रः ननर्दचैवातिबलोमहात्मावृत्रंनिहत्येवसहस्रनेत्रः॥५२॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणिदुःशासनवधेत्र्यशीतितमोऽध्यायः॥ ८३॥ ॥ ७९॥

दुःशासनइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ संजयउवाच ॥ ॥ दुःशासनेतुनिहतेतवपुत्रामहारथाः ॥ महाक्रोधविषावीराःसमरेष्वपलायिनः ॥ १ ॥ दशराजन्महावीर्याभीमंप्राच्छादयन्शरैः ॥ निषंगी कवचीपाशीदंडधारोधनुर्धरः ॥ २ ॥ अलोलुपःसहःषंढोवातवेगसुवर्चसौ ॥ एतेसमेत्यसहिताभ्रातृव्यसनकर्शिताः ॥ ३ ॥ भीमसेनंमहाबाहुंमार्गणैःसमवारयन् ॥ सवार्यमाणोविशिखैःसमंतात्तैर्महारथैः ॥ ४ ॥ भीमःक्रोधाग्निरक्ताक्षःक्रुद्धःकालइवाबभौ ॥ तांस्तुभल्लैर्महावेगैर्दशभिर्दशभारतान् ॥ ५ ॥ रुक्मांगदान् रुक्मपुंखैःपार्थोनिन्येयमक्षयम् ॥ हतेषुतेषुवीरेषुप्रदुद्रावबलंतव ॥ ६ ॥ पश्यतःसूतपुत्रस्यपांडवस्यभयार्दितम् ॥ ततःकर्णोमहाराजप्रविवेशमहद्भयम् ॥ ७ ॥ दृष्ट्वा भीमस्यविक्रांतमंतकस्यप्रजास्विव ॥ तस्यत्वाकारभावज्ञःशल्यःसमितिशोभनः ॥ ८ ॥ उवाचवचनंकर्णंप्राप्तकालमरिंदमम् ॥ माव्यथांकुरुराधेयनैवंत्वय्युपपद्यते ॥ ९ ॥ एतेद्रवंतिराजानोभीमसेनभयार्दिताः ॥ दुर्योधनश्चसंमूढोभ्रातृव्यसनकर्शितः ॥ १० ॥ दुःशासनस्यरुधिरेपीयमानेमहात्मना ॥ व्यापन्नचेतसश्चैवशोकोपहतचेतसः ॥ ११ ॥ दुर्योधनमुपासंतेपरिवार्यसमंततः ॥ कृपप्रभृतयश्चैतेहतशेषाःसहोदराः ॥ १२ ॥ पांडवालब्धलक्षाश्चधनंजयपुरोगमाः ॥ त्वामेवाभिमुखाःशूरायुद्धायसमुपस्थिताः ॥ १३ ॥ सत्वंपुरुषशार्दूलपौरुषेणसमास्थितः ॥ क्षत्रधर्मंपुरस्कृत्यप्रत्युद्याहिधनंजयम् ॥ १४ ॥ भारोहिधार्तराष्ट्रेणत्वयिसर्वःसमाहितः ॥ तमुद्वहमहाबाहोयथाशक्तियथाबलम् ॥ १५ ॥ जयेस्याद्विपुलाकीर्तिर्ध्रुवःस्वर्गःपराजये ॥ वृषसेनश्चराधेयसंक्रुद्धस्तनयस्तव ॥ १६ ॥ त्वयिमोहंसमापन्नेपांडवानभिधावति ॥ एतच्छ्रुत्वातुवचनंशल्यस्यामिततेजसः ॥ हृदिचावश्यकंभावंचक्रेयुद्धायसुस्थिरम् ॥ १७ ॥ ततःक्रुद्धोवृषसेनोभ्यधावदवस्थितंप्रमुखेपांडवंतम् ॥ वृकोदरंकालमिवात्तदंडंगदाहस्तंयोधयंतंत्वदीयान् ॥ १८ ॥ तमभ्यधावन्नकुलःप्रवीरोरोषादमित्रंप्रतुदन्पृषत्कैः ॥ कर्णस्यपुत्रंसमरेप्रहृष्टंपुराजिघांसुर्मघवेवजंभम् ॥ १९ ॥ ततोध्वजंस्फाटिकचित्रकंचुकंचिच्छेदवीरोनकुलःक्षुरेण ॥ कर्णात्मजस्येष्वसनंचचित्रंभल्लेनजांबूनदचित्रनद्धम् ॥ २० ॥ अथान्यदादायधनुःसशीघ्रंकर्णात्मजःपांडवमभ्यविध्यत् ॥ दिव्यैरस्त्रैरभ्यवर्षच्चसोपिकर्णस्यपुत्रोनकुलंकृतास्त्रः ॥ २१ ॥ शराभिघाताच्चरुषाचराजन्स्वयाचभासास्त्रसमीरणाच्च ॥ जज्वालकर्णस्यसुतोतिमात्रमिद्धोयथाज्याहुतिभिर्हुताशः ॥ २२ ॥ कर्णस्यपुत्रोनकुलस्यराजन्सर्वानश्वानक्षिणोदुत्तमास्त्रैः ॥ वनायुजान्वैनकुलस्यशुभ्रानुदग्रगान्हेमजालावनद्धान् ॥ २३ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ इतिकर्णपर्वणिनैलकंठीयेभारतभावदीपेचतुरशीतितमोऽध्यायः ॥ ८४ ॥

ततोहताश्वाद्वरुत्थयानादादायचर्मामलरुक्मचंद्रम् ॥ आकाशसंकाशमसिंप्रगृह्यदोधूयमानःखगवच्चचार ॥ २४ ॥ ततोंतरिक्षेचरथाश्वनागंचिच्छेदतूर्णंनकुलश्चित्रयोधी ॥ तेप्रापतन्नसिनागांविशस्तायथाश्वमेधेपशवःशमित्रा ॥ २५ ॥ द्विसाहस्राःपातितायुद्धशौंडानानादेश्याःसुभृताःसत्यसंधाः ॥ एकेनसंख्येनकुलेनकृत्ताजयेप्सुनानुत्तमचंदनांगाः ॥ २६ ॥ तमापतंतंनकुलंसोभिपत्यसमंततःसायकैःप्रत्यविध्यत् ॥ सतुद्यमानोनकुलःपृषत्कैर्विव्याधवीरंसचुकोपविद्धः ॥ २७ ॥ महाभयेरक्ष्यमाणोमहात्माभ्रात्राभीमेनाकरोत्तत्रभीमम् ॥ तंकर्णपुत्रोव्यधमंतमेकंनराश्वमातंगरथाननेकान् ॥ २८ ॥ क्रीडंतमष्टादशभिःपृषत्कैर्विव्याधवीरंनकुलंसरोषः ॥ सतेनविद्धोतिभृशंतरस्वीमहाहवेवृषसेनेनराजन् ॥ २९ ॥ क्रुद्धेनधावन्समरेजिघांसुःकर्णात्मजंपांडुसुतोनृवीरः ॥ वितत्यपक्षौसहसापतंतंश्येनंयथैवामिषलुब्धमाजौ ॥ ३० ॥ अवाकिरद्वृषसेनस्ततस्तंशितैःशरैर्नकुलमुदारवीर्यम् ॥ सतान्मोघांस्तस्यकुर्वन्शरौघान्चचारमार्गान्नकुलश्चित्ररूपान् ॥ ३१ ॥ अथास्यतूर्णंचरतोनरेंद्रखड्गेनचित्रंनकुलस्यतस्य ॥ महेषुभिर्व्यधमत्कर्णपुत्रोमहाहवेचर्मसहस्रतारम् ॥ ३२ ॥ तंचायसंनिशितंतीक्ष्णधारंविकोशमुग्रंगुरुभारसाहम् ॥ द्विषच्छरीरांतकरंसुघोरमाधुन्वतःसर्पमिवोग्ररूपम् ॥ ३३ ॥ क्षिप्रंशरैःषड्भिरमित्रसाहश्चकर्तखड्गंनिशितैःसुवेगैः ॥ पुनश्चदीप्तैर्निशितैःपृषत्कैःस्तनांतरेगाढमथाभ्यविध्यत् ॥ ३४ ॥ कृत्वातुतद्दुष्करमार्यजुष्टमन्यैर्नरैःकर्मरणेमहात्मा ॥ ययौरथंभीमसेनस्यराजन्शराभितप्तोनकुलस्त्वरावान् ॥ ३५ ॥ सभीमसेनस्यरथंहताश्वोमाद्रीसुतःकर्णसुताभितप्तः ॥ आपुप्लुवेसिंहइवाचलाग्रंसंप्रेक्ष्यमाणस्यधनंजयस्य ॥ ३६ ॥ ततःक्रुद्धोवृषसेनोमहात्माववर्षताविषुजालेनवीरः ॥ महारथावेकरथेसमेतौशरैःप्राभिंदन्निवपांडवेयौ ॥ ३७ ॥ तस्मिन्रथेनिहतेपांडवस्यक्षिप्रंचखड्गेविशिखैर्निकृत्ते ॥ अन्येचसंहत्यकुरुप्रवीरास्ततोन्यघ्नन्शरवर्षैरुपेत्य ॥ ३८ ॥ तौपांडवेयौपरितःसमेतान्संहूयमानाविवहव्यवाहौ ॥ भीमार्जुनौवृषसेनायक्रुद्धौववर्षतुःशरवर्षंसुघोरम् ॥ ३९ ॥ अथाब्रवीन्मारुतिःफाल्गुनंचपश्यस्वैनंनकुलंपीड्यमानम् ॥ अयंचनोबाधतेकर्णपुत्रस्तस्माद्भवान्प्रत्युपयातुकार्णिम् ॥ ४० ॥ सतन्निशम्यैववचःकिरीटीरथंसमासाद्यवृकोदरस्य ॥ अथाब्रवीन्नकुलोवीक्ष्यवीरमुपागतंशातयशीघ्रमेनम् ॥ ४१ ॥ इत्येवमुक्तःसहसाकिरीटीभ्रात्रासमक्षंनकुलेनसंख्ये ॥ कपिध्वजंकेशवसंगृहीतंप्रैषीदुदग्रोवृषसेनायवाहम् ॥ ४२ ॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणिवृषसेनयुद्धेनकुलपराजयेचतुरशीतितमोऽध्यायः ॥ ८४ ॥

नकुलमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ संजयउवाच ॥ ॥ नकुलमथविदित्वाछिन्नबाणासनासिंविरथमरिशरार्तंकर्णपुत्रास्त्रभग्नम् ॥ पवनधुतपताकाह्वादिनोवल्गिताश्वावरपुरुषनियुक्तास्तेरथैः शीघ्रमीयुः ॥ १ ॥ द्रुपदसुतवरिष्ठाः पंचशैनेयषष्ठाद्रुपददुहितृपुत्राःपंचचामित्रसाहाः ॥ द्विरदरथनराश्वान्सूदयंतस्त्वदीयान्भुजगपतिनिकाशैर्मार्गणैरात्तशस्त्राः ॥ २ ॥ अथतवरथमुख्यास्तान्प्रतीयुस्त्वरंतःकृपहृदिकसुतौचद्रौणिदुर्योधनौच ॥ शकुनिसुतवृकौचक्राथदेवावृधौचद्विरदजलदघोषैःस्यंदनैःकार्मुकैश्च ॥ ३ ॥ तवनृपरथिवीरास्तान्दशैकंचवीरान्नवरशरवराग्रैस्ताडयंतोभ्यरुंधन् ॥ नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैःकुलिंदाः ॥ ४ ॥ सुकल्पिताहैमवतामदोत्कटारणाभिकामैःकृतिभिःसमास्थिताः ॥ सुवर्णजालैर्विततावभुर्गजास्तथाययथाखेजलदाःसविद्युतः ॥ ५ ॥ कुलिंदपुत्रोदशभिर्महायसैः कृपंससूताश्वमपीडयद्भृशम् ॥ ततःशरद्वत्सुतसायकैर्हतःसहैवनागेनपपातभूतले ॥ ६ ॥ कुलिंदपुत्रावरजस्तुतोमरैर्दिवाकरांशुप्रतिमैरयस्मयैः ॥ रथंचविक्षोभ्यननादनर्दतस्ततोस्यगांधारपतिःशिरोऽहरत् ॥ ७ ॥ ततःकुलिंदेषुहतेषुतेष्वथप्रहृष्टरूपास्तवतेमहारथाः ॥ भृशंप्रदध्मुर्लवणांबुसंभवान्परांश्चबाणासनपाणयो ऽभ्ययुः ॥ ८ ॥ अथाभवद्युद्धमतीवदारुणंपुनःकुरूणांसहपांडुसृंजयैः ॥ शरासिशक्त्यृष्टिगदापरश्वधैर्नराश्वनागासुहरंभृशाकुलम् ॥ ९ ॥ रथाश्वमातंगपदातिभिस्ततःपरस्परंविप्रहताःपतन्क्षितौ ॥ यथासविद्युत्स्तनिताबलाहकाःसमाहतादिग्भ्यइवोग्रमारुतैः ॥ १० ॥ ततःशतानीकमतान्महागजांस्तथारथान्पत्तिगणांश्चतान्बहून् ॥ जघानभोजस्तुहयानथापतन्क्षणाद्विशस्ताःकृतवर्मणःशरैः ॥ ११ ॥ अथापरेद्रौणिहतामहाद्विपास्त्रयःससर्वायुधयोधकेतनाः ॥ निपेतुरुर्व्यांव्यसवोनिपातितास्तथाययथावज्रहतामहाचलाः ॥ १२ ॥ कुलिंदराजावरजादनंतरःस्तनांतरेपत्रिवरैरताडयत् ॥ तवात्मजंतस्यतवात्मजःशरैःशितैःशरीरंव्यहनद्द्विपंचतम् ॥ १३ ॥ सनागराजःसहराजसूनुनापपातरक्तंबहुसर्वतःक्षरन् ॥ महेंद्रवज्रप्रहतोंबुदागमेयथाजलंगैरिकपर्वतस्तथा ॥ १४ ॥ कुलिंदपुत्रप्रहितोपरोद्विपःक्राथंससूताश्वरथंव्यपोथयत् ॥ ततोपतत्क्राथशराभिघातितःसहेश्वरोवज्रहतोयथागिरिः ॥ १५ ॥ रथीद्विपस्थेनहतोपतच्छरैःक्राथाधिपःपर्वतजेनदुर्जयः ॥ सवाजिसूतेष्वसनध्वजस्तथाययथामहावातहतोमहाद्रुमः ॥ १६ ॥ वृकोद्विपस्थंगिरिराजवासिनंभृशंशरैर्द्वादशभिःपराभिनत् ॥ ततोवृकंसाश्वरथंमहाद्विपोद्रुतं[illegible]र्भिश्चरणैर्व्यपोथयत् ॥ १७ ॥ सनागराजःसनियंतृकोपतत्तथाहतोबभ्रुसुतेषुभिर्भृशम् ॥ सचापिदेवावृधसूनुरर्दितःपपातनुन्नःसहदेवसूनुना ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

विषाणगात्रावरयोधपातिनागजेनहंतुंशकुनिंकुलिंदजः॥ जगामवेगेनभृशार्दयंश्चतंततोस्यगांधारपतिःशिरोहरत्॥ १९॥ततःशतानीकहतामहागजाहयारथाः
पत्तिगणाश्चतावकाः ॥ सुपर्णवातप्रहतायथोरगास्तथागतागांविवशाविचूर्णिताः ॥ २० ॥ ततोभ्यविध्यद्बहुभिःशितैःशरैःकलिंगपुत्रोनकुलात्मजंस्मयन् ॥
ततोस्यकोपाद्विचकर्तनाकुलिःशिरःक्षुरेणांबुजसंनिभाननम् ॥ २१ ॥ ततःशतानीकमविध्यदायसैस्त्रिभिःशरैःकर्णसुतोर्जुनंत्रिभिः ॥ त्रिभिश्चभीमंनकुलंचस
प्तभिर्जनार्दनंद्वादशभिश्चसायकैः ॥ २२ ॥ तदस्यकर्मातिमनुष्यकर्मणःसमीक्ष्यहृष्टाःकुरवोभ्यपूजयन् ॥ पराक्रमज्ञास्तुधनंजयस्ययेहुतोयमग्नावितितेतुमेनिरे
॥ २३ ॥ ततःकिरीटीपरवीरघातीहताश्वमालोक्यनरप्रवीरः ॥ माद्रीसुतंनकुलंलोकमध्येसमीक्ष्यकृष्णंभृशविक्षतंच ॥ २४ ॥ समभ्यधावद्वृषसेनमाहवेससू
तजस्यप्रमुखेस्थितस्तदा ॥ तमापतंतंनरवीरमुग्रंमहाहवेबाणसहस्रधारिणम् ॥ २५ ॥ अभ्यापतत्कर्णसुतोमहारथंयथामहेंद्रंनमुचिःपुरातथा ॥ ततोद्भुतंचै
त्रशरेणपार्थंशितेनविद्ध्वायुधिकर्णपुत्रः ॥ २६ ॥ ननादनादंसुमहानुभावोविद्ध्वेवशक्रंनमुचिःसवीरः ॥ पुनःसपार्थंवृषसेनउग्रैर्बाणैरविध्यद्भुजमूलेतुसव्ये
॥ २७ ॥ तथैवकृष्णंनवभिःसमार्दयत्पुनश्चपार्थंदशभिर्जघान ॥ पूर्वंयथावृषसेनप्रयुक्तैरभ्याहतःश्वेतहयःशरैस्तैः ॥ २८ ॥ संरंभमीषद्गमितोवधायकर्णात्मज
स्याथमनःप्रदध्रे ॥ ततःकिरीटीरणमूर्ध्निकोपात्कृत्वात्रिशाखांभ्रुकुटिंललाटे ॥ २९ ॥ मुमोचतूर्णंविशिखान्महात्मावधेधृतःकर्णसुतस्यसंख्ये ॥ आरक्तने
त्रोंतकशत्रुहंताउवाचकर्णंभृशमुत्स्मयंस्तदा ॥ ३० ॥ दुर्योधनंद्रौणिमुखांश्चसर्वानहंरणेवृषसेनंतमुग्रम् ॥ संपश्यतःकर्णतवाद्यसंख्येनयामिलोकंनिशितैः
पृषत्कैः ॥ ३१ ॥ ऊनंचतावद्द्विजनावदंतिसर्वैर्भवद्भिर्ममसूनुर्हतोसौ ॥ एकोरथोमद्विहीनस्तरस्वीअहंहनिष्येभवतांसमक्षम् ॥ ३२ ॥ संरक्ष्यतांरथसंस्थाःसुतोय
महंहनिष्येवृषसेनमुग्रम् ॥ पश्चाद्वधिष्येत्वामपिसंप्रमूढमहंहनिष्येर्जुनआजिमध्ये ॥ ३३ ॥ तमद्यमूलंकलहस्यसंख्येदुर्योधनापाश्रयजातदर्पम् ॥ त्वामद्यहंता
स्मिरणेप्रसह्यअस्यैवहंतायुधिभीमसेनः ॥ ३४ ॥ दुर्योधनस्याधमपूरुषस्ययस्यानयादेषमहान्क्षयोभवत् ॥ सएवमुक्त्वाविनिमृज्यचापंलक्ष्यंहिकृत्वावृषसेनमा
जौ ॥ ३५ ॥ ससर्जबाणान्विशिखान्महात्मावधायराजन्कर्णसुतस्यसंख्ये ॥ विव्याधचैनंदशभिःपृषत्कैर्मर्मस्वशंकंप्रहसन्किरीटी ॥ ३६ ॥ चिच्छेदचास्ये
ष्वसनंभुजौचक्षुरैश्चतुर्भिर्निशितैःशिरश्च ॥ सपार्थबाणाभिहतःपपातरथाद्विबाहुर्विशिराधरायाम् ॥ ३७ ॥

सुपुष्पितोवृक्षवरोतिकायोवातेरितःशालइवाद्रिशृंगात् ॥ संप्रेक्ष्यबाणाभिहतंपतंतंरथात्सुतंसूतजःक्षिप्रकारी ॥ ३८ ॥ रथंरथेनाशुजगामरोषात्किरीटिनःपु
त्रवधाभितप्तः ॥ ततःसमक्षंस्वसुतंविलोक्यकर्णोहतंश्वेतहयेनसंख्ये ॥ संरंभमागम्यपरंमहात्माकृष्णार्जुनौसहसैवाभ्यधावत् ॥ ३९ ॥ ॥ इतिश्रीमहाभारतेक
र्णपर्वणिवृषसेनवधेपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ॥ तमायांतमभिप्रेक्ष्यवेलोद्धृत्तमिवार्णवम् ॥ गर्जंतंसुमहाकायंदुर्निवारंसु
रैरपि ॥ १ ॥ अर्जुनंप्राहदाशार्हःप्रहस्यपुरुषर्षभः ॥ अयंसरथआयातिश्वेताश्वःशल्यसारथिः ॥ २ ॥ येनतेसहयोद्धव्यंस्थिरोभवधनंजय ॥ पश्यचैनंसमायुक्तं
रथंकर्णस्यपांडव ॥ ३ ॥ श्वेतवाजिसमायुक्तंयुक्तंराधासुतेनच ॥ नानापताकाकलिलंकिंकिणीजालमालिनम् ॥ ४ ॥ उह्यमानमिवाकाशेविमानंपांडुरैर्हयैः ॥
ध्वजंचपश्यकर्णस्यनागकक्षंमहात्मनः ॥ ५ ॥ आखंडलधनुःप्रख्यमुल्लिखंतमिवांबरम् ॥ पश्यकर्णसमायांतंधार्तराष्ट्रप्रियैषिणम् ॥ ६ ॥ शरधाराविमुंचंतंधारा
सारमिवांबुदम् ॥ एषमद्रेश्वरोराजारथाग्रेपर्यवस्थितः ॥ ७ ॥ नियच्छतिहयानस्यराधेयस्यामितौजसः ॥ शृणुदुंदुभिनिर्घोषंशंखशब्दंचदारुणम् ॥ ८ ॥ सिंहना
[illegible]विविधान्शृणुपांडवसर्वतः ॥ अंतर्धायमहाशब्दान्कर्णेनामिततेजसा ॥ ९ ॥ दोधूयमानस्यभृशंधनुषःशृणुनिःस्वनम् ॥ एतेदीर्यंतिसगणाःपंचालानांमहार
[illegible]ः ॥ १० ॥ दृष्ट्वाकेसरिणंक्रुद्धंमृगाइवमहावने ॥ सर्वयत्नेनकौंतेयहंतुमर्हसिसूतजम् ॥ ११ ॥ नहिकर्णशरानन्यःसोढुमुत्सहतेनरः ॥ सदेवासुरगंधर्वांस्त्रींल्लोका
न्सचराचरान् ॥ १२ ॥ त्वंहिजेतुंरणेशक्तस्तथैवविदितंमम ॥ भीममुग्रंमहात्मानंत्र्यक्षंशर्वंकपर्दिनम् ॥ १३ ॥ नशक्ताद्रष्टुमीशानंकिंपुनर्योधितुंप्रभुम् ॥ त्वया
साक्षान्महादेवःसर्वभूतशिवःशिवः ॥ १४ ॥ युद्धेनाराधितःस्थाणुर्देवाश्चवरदास्तव ॥ तस्यपार्थप्रसादेनदेवदेवस्यशूलिनः ॥ १५ ॥ जहिकर्णमहाबाहोनमुचिं
वृत्रहायथा ॥ श्रेयस्तेस्तुसदापार्थयुद्धेजयमवाप्नुहि ॥ १६ ॥ ॥ अर्जुनउवाच ॥ ॥ ध्रुवएवजयःकृष्णममनास्त्यत्रसंशयः ॥ सर्वलोकगुरुर्यस्त्वंतुष्टोसिमधुसूदन ॥
॥ १७ ॥ चोदयाश्वान्हृषीकेशरथंमममहारथ ॥ नाहत्वासमरेकर्णंनिवर्तिष्यतिफाल्गुनः ॥ १८ ॥ अद्यकर्णंहतंपश्यमच्छरैःशकलीकृतम् ॥ मांवाद्रक्ष्यसिगोविं
दकर्णेननिहतंशरैः ॥ १९ ॥ उपस्थितमिदंघोरंयुद्धंत्रैलोक्यमोहनम् ॥ यज्जनाःकथयिष्यंतियावद्भूमिर्धरिष्यति ॥ २० ॥ एवंब्रुवंस्तदापार्थःकृष्णमक्लिष्टकारिणम् ॥
प्र[illegible]युयौरथेनाशुगजंप्रतिगजोयथा ॥ २१ ॥

॥ २[illegible] २३ ॥ ॥ इतिकर्णपर्वणिनैलकंठीयेभारतभावदीपेषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ७ ॥ ॥ वृषसेनमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

पुनरप्याहतेजस्वीपार्थःकृष्णमरिंदम ॥ चोदयाश्वान्हृषीकेशकालोयमतिवर्तते ॥ एवमुक्तस्तदातेनपांडवेनमहात्मना ॥ २२ ॥ जयेनसंपूज्यसपांडवंतदाप्रचोदयामासहयान्मनोजवान् ॥ सपांडुपुत्रस्यरथोमनोजवःक्षणेनकर्णस्यरथाग्रतोभवत् ॥ २३ ॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णार्जुनद्वैरथेवासुदेववाक्येषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ॥ वृषसेनंहतंदृष्ट्वाशोकामर्षसमन्वितः ॥ पुत्रशोकोद्भवंवारिनेत्राभ्यांसमवासृजत् ॥ १ ॥ रथेनकर्णस्तेजस्वीजगामाभिमुखोरिपुम् ॥ युद्धायामर्षताम्राक्षःसमाहूयधनंजयम् ॥ २ ॥ तौरथौसूर्यसंकाशौवैयाघ्रपरिवारितौ ॥ समेतौददृशुस्तत्रद्वाविवार्कौसमुद्गतौ ॥ ३ ॥ श्वेताश्वौपुरुषौदिव्यावास्थितावरिमर्दनौ ॥ शुशुभातेमहात्मानौचंद्रादित्यौयथादिवि ॥ ४ ॥ तौदृष्ट्वाविस्मयंजग्मुःसर्वसैन्यानिमारिष ॥ त्रैलोक्यविजयेयत्ताविंद्रवैरोचनाविव ॥ ५ ॥ रथज्यातलनिर्ह्रादैर्बाणसिंहरवैस्तथा ॥ तौरथावभ्यधावंतौसमालोक्यमहीक्षिताम् ॥ ६ ॥ ध्वजौचदृष्ट्वासंसक्तौविस्मयः[illegible]पद्यत ॥ हस्तिकक्षंचकर्णस्यवानरंचकिरीटिनः ॥ ७ ॥ तौरथौसंप्रसक्तौतुदृष्ट्वाभारतपार्थिवाः ॥ सिंहनादरवांश्चक्रुःसाधुवादांश्चपुष्कलान् ॥ ८ ॥ दृष्ट्वाचद्वैरथंताभ्यांतत्रयोधाःसहस्रशः ॥ चक्रुर्बाहुस्वनांश्चैवतथाचैवावधूननम् ॥ ९ ॥ आजघ्नुःकुरवस्तत्रवादित्राणिसमंततः ॥ कर्णंप्रहर्षयिष्यंतःशंखान्दध्मुश्चसर्वशः ॥ १० ॥ तथैवपांडवाःसर्वेहर्षयंतोधनंजयम् ॥ तूर्यशंखनिनादेनदिशःसर्वाव्यनादयन् ॥ ११ ॥ क्ष्वेडितास्फोटितोत्कुष्टैस्तुमुलंसर्वतोभवत् ॥ बाहुशब्दैश्चशूराणांकर्णार्जुनसमागमे ॥ १२ ॥ तौदृष्ट्वापुरुषव्याघ्रौरथस्थौरथिनांवरौ ॥ प्रगृहीतमहाचापौशरशक्तिध्वजायुतौ ॥ १३ ॥ वर्मिणौबद्धनिस्त्रिंशौश्वेताश्वौशंखशोभितौ ॥ तूणीरवरसंपन्नौद्वावप्येतौसुदर्शनौ ॥ १४ ॥ रक्तचंदनदिग्धांगौसमदौगोवृषाविव ॥ चापविद्युद्ध्वजोपेतौशस्त्रसंपत्तियोधिनौ ॥ १५ ॥ चामरव्यजनोपेतौश्वेतच्छत्रोपशोभितौ ॥ कृष्णशल्यरथोपेतौतुल्यरूपौमहारथौ ॥ १६ ॥ सिंहस्कंधौदीर्घभुजौरक्ताक्षौहेममालिनौ ॥ सिंहस्कंधप्रतीकाशौव्यूढोरस्कौमहाबलौ ॥ अन्योन्यवधमिच्छंतावन्योन्यजयकांक्षिणौ ॥ १७ ॥ अन्योन्यमभिधावंतौगोष्ठेगोवृषभाविव ॥ प्रभिन्नाविवमातंगौसुसंरब्धाविवाचलौ ॥ १८ ॥ आशीविषशिशुप्रख्यौयमकालांतकोपमौ ॥ इंद्रवृत्राविवक्रुद्धौसूर्यचंद्रसमप्रभौ ॥ १९ ॥ महाग्रहाविवक्रुद्धौयुगांतायसमुत्थितौ ॥ देवगर्भौदेवबलौदेवतुल्यौचरूपतः ॥ २० ॥ यदृच्छयासमायातौसूर्याचंद्रमसौयथा ॥ बलिनौसमरेदृप्तौनानाशस्त्रधरौयुधि ॥ २१ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० [illegible] ४ ॥ ३५ ॥ ३६ ॥ ३७॥३८॥३९॥४०॥४१॥४२॥४३॥४४॥ व्यालमृगाःशशशृगाः ॥४५॥४६॥४७॥

तौदृष्ट्वापुरुषव्याघ्रौशार्दूलाविवधिष्ठितौ ॥ बभूवपर[illegible]ते ॥ २२ ॥ संशयःसर्वभूतानांविजयेसमपद्यत ॥ समेतौपुरुषव्याघ्रौप्रेक्ष्यकर्ण
धनंजयौ ॥ २३ ॥ उभौवरायुधधरावुभौरणकृतश्रमौ ॥ [illegible]हुशब्देननादयंतौनभस्तलम् ॥ २४ ॥ उभौविश्रुतकर्माणौपौरुषेणबलेनच ॥ उभौचसदृशौ
युद्धेशंबरामरराजयोः ॥ २५ ॥ कार्तवीर्यसमौचोभौतथाद[illegible]ःसमौ ॥ विष्णुवीर्यसमौचोभौतथाभवसमौयुधि ॥ २६ ॥ उभौश्वेतहयौराजन्रथप्रवरवाहि
नौ ॥ सारथीप्रवरौचैवतयोरास्तांमहारणे ॥ २७ ॥ ततोदृष्ट्वामहाराजराजमानौमहारथौ ॥ सिद्धचारणसंघानांविस्मयःसमपद्यत ॥ २८ ॥ तवपुत्रास्ततःकर्णं
सबलाभरतर्षभ ॥ परिवव्रुर्महात्मानंक्षिप्रमाहवशोभिनम् ॥ २९ ॥ तथैवपांडवाहृष्टाधृष्टद्युम्नपुरोगमाः ॥ परिवव्रुर्महात्मानंपार्थमप्रतिमंयुधि ॥ ३० ॥ तावका
नांरणेकर्णोग्लहोह्यासीद्विशांपते ॥ तथैवपांडवेयानांग्लहःपार्थोभवत्तदा ॥ ३१ ॥ तएवसभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्स्मते ॥ तत्रैषांग्लहमानानांध्रुवौज
यपराजयौ ॥ ३२ ॥ ताभ्यांद्यूतंसमासक्तंविजयायेतरायच ॥ अस्माकंपांडवानांचस्थितानांरणमूर्धनि ॥ ३३ ॥ तौतुस्थितौमहाराजसमरेयुद्धशालिनौ ॥ अन्यो
[illegible]तिसंरब्धावन्योन्यवधकांक्षिणौ ॥ ३४ ॥ तावुभौप्रजिहीर्षंताविंद्रवृत्राविवप्रभो ॥ भीमरूपधरावास्तांमहाधूमाविवग्रहौ ॥ ३५ ॥ ततोंतरिक्षेसाक्षेपावि
[illegible]दाभरतर्षभ ॥ मिथोभेदाश्चभूतानामासन्कर्णार्जुनांतरे ॥ ३६ ॥ व्यश्रूयंतमिथोभिन्नाःसर्वलोकास्तुमारिष ॥ देवदानवगंधर्वाःपिशाचोरगराक्षसाः ॥ ३७ ॥
प्रतिपक्षग्रहंचक्रुःकर्णार्जुनसमागमे ॥ द्यौरासीत्सूतपुत्रस्यपक्षेमातेवधिष्ठिता ॥ ३८ ॥ भूमिर्धनंजयस्यासीन्मातेवजयकांक्षिणी ॥ गिरयःसागराश्चैवनद्य
श्चसजलास्तथा ॥ ३९ ॥ वृक्षाश्चोषधयश्चैवव्याश्रयंतपरस्परम् ॥ असुरायातुधानाश्चगुह्यकाश्चपरंतप ॥ ४० ॥ तेकर्णंसमपद्यंतहृष्टरूपाःसमंततः ॥ मुनयश्चा
रणाःसिद्धावैनतेयावयांसिच ॥ ४१ ॥ रत्नानिनिधयःसर्वेवेदाश्चाख्यानपंचमाः ॥ सोपवेदोपनिषदःसरहस्याःससंग्रहाः ॥ ४२ ॥ वासुकिश्चित्रसेनश्चतक्षकोम
णिकस्तथा ॥ सर्पाश्चैवतथासर्वेकाद्रवेयाश्चसान्वयाः ॥ ४३ ॥ विषवंतोमहाराजनागाश्चार्जुनतोभवन् ॥ ऐरावताःसौरभेयावैशालेयाश्चभोगिनः ॥ ४४ ॥ ए
तेभवन्नर्जुनतःक्षुद्रसर्पाश्चकर्णतः ॥ ईहामृगा[illegible]व्यालमृगामांगल्याश्चमृगद्विजाः ॥ ४५ ॥ पार्थस्यविजयेराजन्सर्वएवाभिसंस्थिताः ॥ वसवोमरुतःसाध्यारुद्रा
[illegible]विनौतथा ॥ ४६ ॥ अग्निरिंद्रश्चसोमश्चपवनोथदिशोदश ॥ धनंजयस्यतेपक्षेआदित्याःकर्णतोभवन् ॥ ४७ ॥

॥ ४[illegible] ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

विशःशूद्राश्चसूताश्चयेचसंकरजातयः ॥ सर्वशस्तेमहाराजराधेयमभजंस्तदा ॥ ४८ ॥ देवास्तुपितृभिःसार्धंसगणाःसपदानुगाः ॥ यमोवैश्रवणश्चैववरु
णश्चयतोर्जुनः ॥ ४९ ॥ ब्रह्मक्षत्रंचयज्ञाश्चदक्षिणाश्चार्जुनंश्रिताः ॥ प्रेताश्चैवपिशाचाश्चक्रव्यादाश्चमृगांडजाः ॥ ५० ॥ राक्षसाःसहयादोभिःश्वसृगालाश्च
कर्णतः ॥ देवब्रह्मनृपर्षीणांगणाःपांडवतोभवन् ॥ ५१ ॥ तुंबुरुप्रमुखाराजन्गंधर्वाश्चयतोर्जुनः ॥ राधेयाःसहमौनेयागंधर्वाप्सरसांगणाः ॥ ५२ ॥ ईहामृगाःप
क्षिगणाद्विपाश्वरथपत्तिभिः ॥ उह्यमानास्तथामेघैर्वायुनाचमनीषिणः ॥ ५३ ॥ दिदृक्षवःसमाजग्मुःकर्णार्जुनसमागमम् ॥ देवदानवगंधर्वानागयक्षाःपतत्रि
णः ॥ ५४ ॥ महर्षयोवेदविदःपितरश्चस्वधाभुजः ॥ तपोविद्यास्तथौषध्योनानारूपबलान्विताः ॥ ५५ ॥ अंतरिक्षेमहाराजविनदंतोवतस्थिरे ॥ ब्रह्माब्रह्मर्षिभिः
[illegible]र्धंप्रजापतिभिरेवच ॥ ५६ ॥ भवश्चैवास्थितोयानेदिव्यंतंदेशमागमत् ॥ समेतौतौमहात्मानौदृष्ट्वाकर्णधनंजयौ ॥ ५७ ॥ अर्जुनोजयतांकर्णमितिशक्रोब्रवी
[illegible]त ॥ जयतामर्जुनंकर्णइतिसूर्यो[illegible]भ्यभाषत ॥ ५८ ॥ हत्वार्जुनंममसुतःकर्णोजयतुसंयुगे ॥ हत्वाकर्णंजयत्वद्यममपुत्रोधनंजयः ॥ ५९ ॥ इतिसूर्यस्यचैवासी
द्विवादोवासवस्यच ॥ पक्षसंस्थितयोस्तत्रतयोर्विबुधसिंहयोः ॥ द्वैपक्ष्यमासीद्देवानामसुराणांचभारत ॥ ६० ॥ समेतौतौमहात्मानौदृष्ट्वाकर्णधनंजयौ ॥ अ
कंपंतत्रयोलोकाःसहदेवर्षिचारणाः ॥ ६१ ॥ सर्वेदेवगणाश्चैवसर्वभूतानियानिच ॥ यतःपार्थस्ततोदेवायतःकर्णस्ततोऽसुराः ॥ ६२ ॥ रथयूथपयोःपक्षौकुरुपां
डववीरयोः ॥ दृष्ट्वाप्रजापतिंदेवाःस्वयंभुवमचोदयन् ॥ ६३ ॥ कोनयोर्विजयीदेवकुरुपांडवयोधयोः ॥ समोस्तुविजयोदेवएतयोर्नरसिंहयोः ॥ ६४ ॥ कर्णा
र्जुनविवादेनसर्वंसंशयितंजगत् ॥ स्वयंभोब्रूहिनस्तथ्यमेतयोर्विजयंप्रभो ॥ ६५ ॥ स्वयंभोब्रूहितद्वाक्यंसमोस्तुविजयोनयोः ॥ तदुपश्रुत्यमघवाप्रणिपत्यपितामह
म् ॥ ६६ ॥ व्यज्ञापयतदेवेशमिदंमतिमतांवरः ॥ पूर्वंभगवता[illegible]कृष्णयोर्विजयोध्रुवः ॥ ६७ ॥ तत्तथास्तुनमस्तेस्तुप्रसीदभगवन्मम ॥ ब्रह्मेशानावथोवाक्यमूच
तुस्त्रिदशेश्वरम् ॥ ६८ ॥ विजयोध्रुवमेवास्यविजयस्यमह[illegible]पांडवेयेनहुतभुक्तोषितःसव्यसाचिना ॥ ६९ ॥ स्वर्गंचसमनुप्राप्यसाहाय्यंशक्रतेकृतं ॥ कर्ण
श्चदानवःपक्षअतःकार्यःपराजयः ॥ ७० ॥ एवंकृतेभ[illegible]तम् ॥ आत्मकार्यंचसर्वेषांगरीयस्त्रिदशेश्वर ॥ ७१ ॥ महात्माफाल्गुनश्चापिसत्य
धर्मरतःसदा ॥ विजयस्तस्यनियतंजायतेनात्रसंशयः [illegible]वान्येनमहात्मावृषभध्वजः ॥ कथंवातस्यनजयोजायतेशतलोचन ॥ ७३ ॥

॥ २३ ॥ वानराणांसिंहनादोलंकांस्फोटयन्निवविदारयन्निवोदभूदितिशेषः ॥ इंद्रेणसहदेवानामिवांगदेनसहवानराणांसिंहनादःसमभवत् ॥ २४ ॥ २५ ॥ कतक० ॥ ९१ ॥
इतिरामाभि० वा० युद्ध० नवनवतितमःसर्गः ॥ ९९ ॥ ॥ ७ ॥ ॥ ७ ॥ महोदरेति ॥ हतौदृष्ट्वासरावणःक्रुद्धोजातइतिशेषः ॥ १ ॥ २ ॥ रुद्धस्यनगरस्य॥

तस्मिन्विनिहतेभूमौतत्सैन्यंसंप्रचुक्षुभे ॥ अभवच्चमहान्क्रोधःसमरेरावणस्यतु ॥ २३ ॥ वानराणांप्रहृष्टानांसिंहनादःसुपुष्कलः ॥ स्फोटयन्निव शब्देनलंकांसाट्टालगोपुरां ॥ सहेंद्रेणवदेवानांनादःसमभवन्महान् ॥ २४ ॥ अथेंद्रशत्रुस्त्रिदशालयानांवनौकसांचैवमहाप्रणादं ॥ श्रुत्वासरोषंयु धिराक्षसेंद्रःपुनश्चयुद्धाभिमुखोवतस्थे ॥ २५ ॥ इत्यार्षेश्रीमद्रामा०वा०युद्ध०नवनवतितमःसर्गः ॥ ९९ ॥ ॥ ७ ॥ ॥ ७ ॥ महो दरमहापार्श्वौहतौदृष्ट्वासरावणः ॥ तस्मिंश्चनिहतेवीरेविरूपाक्षेमहाबले ॥ १ ॥ आविवेशमहान्क्रोधोरावणंतुमहामृधे ॥ सूतंसंचोदयामासवा क्यंचेदमुवाचह ॥ २ ॥ निहतानाममात्यानांरुद्धस्यनगरस्यच ॥ दुःखमेवापनेष्यामिहत्वातौरामलक्ष्मणौ ॥ ३ ॥ रामवृक्षंरणेहन्मिसीतापुष्पफल प्रदं ॥ प्रशाखायस्यसुग्रीवोजांबवान्कुमुदोनलः ॥ ४ ॥ द्विविदश्चैवमैंदश्चअंगदोगंधमादनः ॥ हनूमांश्चसुषेणश्चसर्वेचहरियूथपाः ॥ ५ ॥ सदि शोदशघोषेणरथस्यातिरथोमहान् ॥ नादयन्प्रययौतूर्णंराघवंचाभ्यधावत ॥ ६ ॥ पूरितातेनशब्देनसनदीगिरिकानना ॥ संचचालमहीसर्वात्रस्त सिंहमृगद्विजा ॥ ७ ॥ तामसंसुमहाघोरंचकारास्त्रंसुदारुणं ॥ निर्ददाहकपीन्सर्वांस्तेप्रपेतुःसमंततः ॥ ८ ॥ उत्पपातरजोभूमौतैर्भग्नैःसंप्रधावितैः ॥ नहितत्सहितुंशेकुर्ब्रह्मणानिर्मितंस्वयं ॥ ९ ॥ तान्यनीकान्यनेकानिरावणस्यशरोत्तमैः ॥ दृष्ट्वाभग्नानिशतशोराघवःपर्यवस्थितः ॥ १० ॥ ततो राक्षसशार्दूलोविद्राव्यहरिवाहिनीं ॥ सददर्शततोरामंतिष्ठंतमपराजितं ॥ ११ ॥

वानरबलैरितिशेषः ॥ दुःखमपनेष्याम्येव ॥ ३ ॥ मूलोच्छेदंकरिष्यामीत्याशयेनरामंसर्वाश्रयमहावृक्षत्वेननिरूपयति ॥ रामवृक्षमिति ॥ सीतापुष्पंयस्यसः ॥ सचासौतेनैवपुष्पेण सर्वेषांवानराणांतत्तत्कर्मजफलप्रदस्तं ॥ सुग्रीवादयःप्रशाखायस्यतंप्रशाखासहितंहन्मीतिशेषः ॥ ४ ॥ ५ ॥ इत्युक्त्वारथस्यघोषेणदशदिशोनादयन् ॥ ६ ॥ ७ ॥ तामसमस्त्रंतमोय हदेवताकमस्त्रं ॥ ८ ॥ ब्रह्मणास्वयंनिर्मितंतामसमस्त्रंसहितुंसोढुंनशेकुः ॥ ९ ॥ १० ॥ ११ ॥

॥ १२ ॥ १३ ॥ राघवोहृष्टः ॥ एकःशिष्टःशत्रुर्दृग्गोचरंप्राप्तइतिहर्षः ॥ १४ ॥ १५ ॥ राघवबाणौघैरामविस्फारितेनचयःशब्दस्तेनपेतुः ॥ १६ ॥ सरावणोराजपुत्रयोःसमीपंप्राप्य चंद्रसूर्ययोःसमीपेराहुर्यथाबभौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अभ्यतिक्रम्यबाणैर्व्याकुलीकृत्य ॥ शैलमिवस्थिरमचलंराममासससाद ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ राघवोराव

लक्ष्मणेनसहभ्रात्राविष्णुनावासवंयथा ॥ आलिखंतमिवाकाशमवष्टभ्यमहद्धनुः ॥ १२ ॥ पद्मपत्रविशालाक्षंदीर्घबाहुमरिंदमं ॥ ततोरामो महातेजाःसौमित्रिसहितोबली ॥ १३ ॥ वानरांश्चरणेभग्नानापतंतंचरावणं ॥ समीक्ष्यराघवोहृष्टोमध्येजग्राहकार्मुकं ॥ १४ ॥ विस्फारयितुमारेभेततःसधनुरुत्तमं ॥ महावेगंमहानादंनिर्भिंदन्निवमेदिनीं ॥ १५ ॥ रावणस्यचबाणौघैरामविस्फारितेनच ॥ शब्देनराक्षसास्तेनपेतुश्चशतशस्तदा ॥ १६ ॥ तयोःशरपथंप्राप्यरावणोराजपुत्रयोः ॥ सबभौचयथाराहुःसमीपेशशिसूर्ययोः ॥ १७ ॥ तमिच्छन्प्रथमंयोद्धुंलक्ष्मणोनिशितैःशरैः ॥ मुमोचधनुरायम्यशरानग्निशिखोपमान् ॥ १८ ॥ तान्मुक्तमात्रानाकाशेलक्ष्मणेनधनुष्मता ॥ बाणान्बाणैर्महातेजारावणःप्रत्यवारयत् ॥ १९ ॥ एकमेकेनबाणेनत्रिभिस्त्रीन्दशभिर्दश ॥ लक्ष्मणस्यप्रचिच्छेददर्शयन्पाणिलाघवं ॥ २० ॥ अभ्यतिक्रम्यसौमित्रिंरावणःसमितिंजयः ॥ आससादरणेरामंस्थितंशैलमिवापरं ॥ २१ ॥ सराघवंसमासाद्यक्रोधसंरक्तलोचनः ॥ व्यसृजच्छरवर्षाणिरावणोराक्षसेश्वरः ॥ २२ ॥ शरधारास्ततोरामोरावणस्यधनुश्च्युताः ॥ दृष्ट्वैवापतिताःशीघ्रंभल्लान्जग्राहसत्वरं ॥ २३ ॥ ताञ्छरौघांस्ततोभल्लैस्तीक्ष्णैश्चिच्छेदराघवः ॥ दीप्यमानान्महाघोराञ्छरानाशीविषोपमान् ॥ २४ ॥ राघवोरावणंतूर्णंरावणोराघवंतथा ॥ अन्योन्यंविविधैस्तीक्ष्णैःशरवर्षैर्ववर्षतुः ॥ २५ ॥ चेरतुश्चचिरंचित्रंमंडलंसव्यदक्षिणं ॥ बाणवेगात्समुत्क्षिप्तावन्योन्यमपराजितौ ॥ २६ ॥ तयोर्भूतानिवित्रेसुर्युगपत्संप्रयुध्यतोः ॥ रौद्रयोःसायकमुचोर्यमांतकनिकाशयोः ॥ २७ ॥ सततंविविधैर्बाणैर्बभूवगगनंतदा ॥ घनैरिवातपापायेविद्युन्मालासमाकुलैः ॥ २८ ॥

णंरावणोराघवमित्यन्योन्यंशरवर्षैर्ववर्षतुर्ववृषतुः ॥ २५ ॥ अन्योन्यंबाणवेगात्समुत्क्षिप्तौअन्योन्यंक्षिप्तवंतौ ॥ अपराजितौअप्रतिहतौ ॥ २६ ॥ सायकंमुंचतइतिसायकमुचौ तयोः ॥ २७ ॥ सततंव्याप्तं ॥ २८ ॥

गवाक्षितमिवसंजातगवाक्षमिव ॥ गृध्रपत्रैस्तद्बंधनैः ॥ सुवाजितैःसम्यक्संपादितवेगैः ॥ आर्षंपुस्त्वंच्चारत्वर्ष्टिभिःविशेषणत्वात् ॥ २९ ॥ तपनेसूर्येऽस्तंगतेचापिशब्दादस्ताचलंत्यक्त्वो
दयाद्रिंगतेपीत्यर्थः ॥ दिवापीतियावत् ॥ यत्तुयथाश्रुतरीत्यारात्रावपीतिव्याचक्षते ॥ तत्रनकश्चिच्चमत्कारः ॥ ३०॥३१ ॥ ३२ ॥ येनव्रजतः ॥ येनयेनमंडलचारेणेत्यर्थः ॥ ३३ ॥

गवाक्षितमिवाकाशंबभूवशरवृष्टिभिः ॥ महावेगैःसुतीक्ष्णाग्रैर्गृध्रपत्रैःसुवाजितैः ॥ २९ ॥ शरांधकारमाकाशंचक्रतुःप्रथमंतदा ॥ गतेस्तंतपने चापिमहामेघाविवोत्थितौ ॥ ३० ॥ तयोरभून्महायुद्धमन्योन्यवधकांक्षिणोः ॥ अनासाद्यमचिंत्यंचवृत्रवासवयोरिव ॥ ३१ ॥ उभौहिपरमेष्वासावुभौयुद्धविशारदौ ॥ उभावस्त्रविदांमुख्यावुभौयुद्धेविचेरतुः ॥ ३२ ॥ उभौहियेनव्रजतस्तेनतेनशरोर्मयः ॥ ऊर्मयोवायुनाविद्धाजग्मुःसागरयोरिव ॥ ३३ ॥ ततःसंसक्तहस्तस्तुरावणोलोकरावणः ॥ नाराचमालांरामस्यललाटेप्रत्यमुंचत ॥ ३४ ॥ रौद्रचापप्रयुक्तांतांनीलोत्पलदलप्रभां ॥ शिरसाधारयद्रामोनव्यथामभ्यपद्यत ॥ ३५ ॥ अथमंत्रानपिजपन्रौद्रमस्त्रमुदीरयन् ॥ शरान्भूयःसमादायरामःक्रोधसमन्वितः ॥ ३६ ॥ मुमोचचमहातेजाश्चापमायम्यवीर्यवान् ॥ तान्शरान्राक्षसेंद्रायचिक्षेपाच्छिन्नसायकः ॥ ३७ ॥ तेमहामेघसंकाशेकवचेपातिताःशराः ॥ अवध्येराक्षसेंद्रस्यनव्यथांजनयंस्तदा ॥ ३८ ॥ पुनरेवाथतंरामोरथस्थंराक्षसाधिपं ॥ ललाटेपरमास्त्रेणसर्वास्त्रकुशलोभिनत् ॥ ३९ ॥ तेभित्वाबाणरूपाणिपंचशीर्षाइवोरगाः ॥ श्वसंतोविविशुर्भूमिंरावणप्रतिकूलिताः ॥ ४० ॥ निहत्यराघवस्यास्त्रंरावणःक्रोधमूर्छितः ॥ आसुरंसुमहाघोरमन्यदस्त्रंचकारसः ॥ ४१ ॥ सिंहव्याघ्रमुखांश्चापिकंककोकमुखानपि ॥ गृध्रश्येनमुखांश्चापिशृगालवदनांस्तथा ॥ ४२ ॥ ईहामृगमुखांश्चापिव्यादितास्यान्भयावहान् ॥ पंचास्यान्लेलिहानांश्चससर्जनिशितान्शरान् ॥ ४३ ॥

संसक्तहस्तोबाणप्रयोगेआसक्तहस्तः ॥ ३४ ॥ ३५ ॥ उदीरयन्प्रवर्तयन् ॥ ३६ ॥ अच्छिन्नसायकःअव्यवच्छिन्नसायकःनिरंतरप्रवर्तितबाणवर्षइतियावत् ॥ ३७ ॥ अवध्येअभेद्ये जनयन्अजनयन् ॥ ३८ ॥ परमास्त्रेणेष्टास्त्रेणयोजितैर्बाणैरभिनत् ॥ ३९ ॥ बाणरूपाणि ॥ प्रशंसायांरूपप् ॥ प्रशस्ताबाणाः ॥ आर्षोलिंगव्यत्ययः ॥ रावणप्रतिकूलिताःरावणेन निवारिताअपिश्वसंतःपंचशीर्षाउरगाइवभूमिंविविशुः ॥ ४० ॥ चकारप्रादुश्चकार ॥ ४१ ॥ ४२ ॥ ईहामृगोवृकः ॥ पंचास्यान्सिंहमुखान् ॥ ४३ ॥

॥ ४४ ॥ यदासुरमस्त्रंप्रादुश्चकारतदाससर्जेत्यन्वयः ॥ ४५ ॥ तमोस्त्रस्यप्रत्यस्त्रंपावकमितितत्ससर्जेत्याह ॥ पावकमिति ॥ ४६ ॥ ततोऽखिलज्योतिर्गणमुखबाणोत्पत्तिरित्याह ॥ अग्निदीप्तमुखानिति ॥ ४७ ॥ विद्युज्जिह्वोपमान्विद्युदर्चिःसदृशान् ॥ कालाजिह्वास्तथार्चिषइतिहलायुधः ॥ ४८ ॥ विलयंजग्मुस्तथापिसहस्रशोवानरान्जघ्नुः ॥ ४९ ॥ संपरिक्षिप्य

शरान्खरमुखांश्चान्यान्वराहमुखसंश्रितान् ॥ श्वानकुक्कुटवक्त्रांश्चमकराशीविषाननान् ॥ ४४ ॥ एतांश्चान्यांश्चमायाभिःससर्जनिशिताञ्छरान् ॥ रामंप्रतिमहातेजाःक्रुद्धःसर्पइवश्वसन् ॥ ४५ ॥ आसुरेणसमाविष्टःसोस्त्रेणरघुपुंगवः ॥ ससर्जास्त्रंमहोत्साहंपावकंपावकोपमः ॥ ४६ ॥ अग्निदीप्तमुखान्बाणांस्तत्रसूर्यमुखानपि ॥ ग्रहनक्षत्रवर्णांश्चमहोल्कामुखसंस्थितान् ॥ ४७ ॥ विद्युज्जिह्वोपमांश्चापिससर्जविविधाञ्छरान् ॥ तेरावणशराघोराराघवास्त्रसमाहताः ॥ ४८ ॥ विलयंजग्मुराकाशेजघ्नुश्चैवसहस्रशः ॥ तदस्त्रंनिहतंदृष्ट्वारामेणाक्लिष्टकर्मणा ॥ ४९ ॥ दृष्टानेदुस्ततःसर्वेकपयःकामरूपिणः ॥ सुग्रीवाभिमुखावीराःसंपरिक्षिप्यराघवं ॥ ५० ॥ ततस्तदस्त्रंविनिहत्यराघवःप्रसह्यतद्रावणबाहुनिःसृतं ॥ मुदान्वितोदाशरथिर्महात्माविनेदुरुच्चैर्मुदिताःकपीश्वराः ॥ ५१ ॥ इत्यार्षेश्रीमद्रा०वा०युद्ध०शततमःसर्गः ॥ १०० ॥ ॥ ७१ ॥ ॥ ७१ ॥ तस्मिन्प्रतिहतेस्त्रेतुरावणोराक्षसाधिपः ॥ क्रोधंचद्विगुणंचक्रेक्रोधाच्चास्त्रमनंतरं ॥ १ ॥ मयेनविहितंरौद्रमन्यदस्त्रंमहाद्युतिः ॥ उत्स्रष्टुंरावणोभीमंराघवायप्रचक्रमे ॥ २ ॥ ततःशूलानिनिश्चेरुर्गदाश्चमुसलानिच ॥ कार्मुकाद्दीप्यमानानिवज्रसाराणिसर्वशः ॥ ३ ॥ मुद्गराःकूटपाशाश्चदीप्ताश्चाशनयस्तथा ॥ निष्पेतुर्विविधास्तीक्ष्णावाताइवयुगक्षये ॥ ४ ॥ तदस्त्रंराघवःश्रीमानुत्तमास्त्रविदांवरः ॥ जघानपरमास्त्रेणगांधर्वेणमहाद्युतिः ॥ ५ ॥ तस्मिन्प्रतिहतेस्त्रेतुराघवेणमहात्मना ॥ रावणःक्रोधताम्राक्षःसौरमस्त्रमुदीरयत् ॥ ६ ॥ ततश्चक्राणिनिष्पेतुर्भास्वराणिमहांतिच ॥ कार्मुकाद्भीमवेगस्यदशग्रीवस्यधीमतः ॥ ७ ॥ तैरासीद्गगनंदीप्तंसंपतद्भिःसमंततः ॥ पतद्भिश्चदिशोदीप्तैश्चंद्रसूर्यैर्ग्रहैरिव ॥ ८ ॥

परिवार्य ॥ ५० ॥ ५१ ॥ कतक० ॥ ९२ ॥ इतिरामाभि०वा०युद्ध०शततमःसर्गः ॥ १०० ॥ ७१ ॥ ॥ ७१ ॥ ॥ तस्मिन्प्रतिहतेइति ॥ क्रोधाच्चास्त्रमनंतरं ॥ चक्रेइतिशेषः ॥ ॥ १ ॥ तत्किमस्त्रंतत्राह ॥ मयेनेति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

तानिसौरास्त्रनिःसृतचक्राणि ॥ बाणबलादेवकेवलंचिच्छेदनप्रत्यस्त्रमपेक्षतेस्म ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ मनुष्यःशीर्षेयस्यतं ॥ मनुष्यशीर्षयुक्तमित्यर्थइत्यन्ये ॥ १४ ॥

तानिचिच्छेदबाणौघैश्चक्राणितुसराघवः ॥ आयुधानिचचित्राणिरावणस्यचमूमुखे ॥ ९ ॥ तदस्त्रंतुहतंदृष्ट्वारावणोराक्षसाधिपः ॥ विव्याधदश
भिर्बाणैरामंसर्वेषुमर्मसु ॥ १० ॥ सविद्धोदशभिर्बाणैर्महाकार्मुकनिःसृतैः ॥ रावणेनमहातेजानप्राकंपतराघवः ॥ ११ ॥ ततोविव्याधगात्रेषुस
र्वेषुसमितिंजयः ॥ राघवस्तुसुसंक्रुद्धोरावणंबहुभिःशरैः ॥ १२ ॥ एतस्मिन्नंतरेक्रुद्धोराघवस्यानुजोबली ॥ लक्ष्मणःसायकान्सप्तजग्राहपरवीर
हा ॥ १३ ॥ तैःसायकैर्महावेगैरावणस्यमहाद्युतिः ॥ ध्वजंमनुष्यशीर्षंतुतस्यचिच्छेदनैकधा ॥ १४ ॥ सारथेश्चापिबाणेनशिरोज्वलितकुंडलं ॥ ज
हारलक्ष्मणःश्रीमान्नैर्ऋतस्यमहाबलः ॥ १५ ॥ तस्यबाणैश्चचिच्छेदधनुर्गजकरोपमं ॥ लक्ष्मणोराक्षसेंद्रस्यपंचभिर्निशितैस्तदा ॥ १६ ॥ नीलमे
घनिभांश्चास्यसदश्वान्पर्वतोपमान् ॥ जघानाप्लुत्यगदयारावणस्यविभीषणः ॥ १७ ॥ हताश्वात्तुतदावेगादवप्लुत्यमहारथात् ॥ कोपमाहारयत्तीव्रं
भ्रातरंप्रतिरावणः ॥ १८ ॥ ततःशक्तिंमहाशक्तिःप्रदीप्तामशनीमिव ॥ विभीषणायचिक्षेपराक्षसेंद्रःप्रतापवान् ॥ १९ ॥ अप्राप्तामेवतांबाणैस्त्रिभि
श्चिच्छेदलक्ष्मणः ॥ अथोदतिष्ठत्सन्नादोवानराणांमहारणे ॥ २० ॥ संपपातत्रिधाछिन्नाशक्तिःकांचनमालिनी ॥ सविस्फुलिंगाज्वलितामहो
ल्केवदिवश्च्युता ॥ २१ ॥ ततःसंभाविततरांकालेनापिदुरासदां ॥ जग्राहविपुलांशक्तिंदीप्यमानांस्वतेजसा ॥ २२ ॥ सावेगिताबलवतारावणेन
दुरात्मना ॥ जज्वालसुमहातेजादीप्ताशनिसमप्रभा ॥ २३ ॥ एतस्मिन्नंतरेवीरोलक्ष्मणस्तंविभीषणं ॥ प्राणसंशयमापन्नंतूर्णमभ्यवपद्यत ॥ २४ ॥
तंविमोक्षयितुंवीरश्चापमायम्यलक्ष्मणः ॥ रावणंशक्तिहस्तंवैशरवर्षैरवाकिरत् ॥ २५ ॥

॥ १५ ॥ गजकरोपमंधनुश्चिच्छेद ॥ १६ ॥ १७ ॥ १८ ॥ महाशक्तिर्महाबलः ॥ १९ ॥ २० ॥ २१ ॥ संभाविततरांअमोघेतिसर्वविख्यातां ॥ दुरासदांदुःसहां ॥ २२ ॥ वेगिताकृ
तवेगा ॥ २३ ॥ तूर्णमभ्यवपद्यत ॥ शक्तिसंमुखंस्वयमागत्यविभीषणंरक्षितवानित्यर्थः ॥ २४ ॥ २५ ॥

महात्मनालक्ष्मणेनविसृष्टेनशरौघेणकीर्यमाणोऽतएवविमुखीकृतविक्रमःकुंठितभ्रातृवधविषयोत्साहोतएवभ्रातरंप्रहर्तुंमनश्चक्रे ॥ २६ ॥ २७ ॥ २८ ॥ लोहितलक्षणाशत्रुरुधिरग्रहणस्वभावा ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ आपतंतींतांशक्तिंशक्त्यधिष्ठातृदेवतामुद्दिश्यानुव्याहरत् ॥ तदेवाह ॥ लक्ष्मणायस्वस्त्यस्तु ॥ त्वंहतोद्यमाहतप्राणनाशोद्योगाअतएवमोघाप्राणापहारांशेमोघाभव ॥ तच्छक्तिस्तुपीडामात्रेणचरितार्थास्त्वितिभावः ॥ स्पर्शमात्रेणप्राणापहरणसामर्थ्ययुक्तायाःशक्तेरनेनस्ववाक्येनमोघीकरणात्स्वस्यसत्यसंकल्पत्वंसूचितं

कीर्यमाणःशरौघेणविसृष्टेनमहात्मना ॥ सप्रहर्तुंमनश्चक्रेविमुखीकृतविक्रमः ॥ २६ ॥ मोक्षितंभ्रातरंदृष्ट्वालक्ष्मणेनसरावणः ॥ लक्ष्मणाभिमुखस्तिष्ठन्निदंवचनमब्रवीत् ॥ २७ ॥ मोक्षितस्तेबलश्लाघिन्यस्मादेवंविभीषणः ॥ विमुच्यराक्षसंशक्तिस्त्वयीयंविनिपात्यते ॥ २८ ॥ एषातेहृदयंभित्वाशक्तिर्लोहितलक्षणा ॥ मद्बाहुपरिघोत्सृष्टाप्राणानादाययास्यति ॥ २९ ॥ इत्येवमुक्त्वातांशक्तिमष्टघंटांमहास्वनां ॥ मयेनमायाविहितामोघांशत्रुघातिनीं ॥ ३० ॥ लक्ष्मणायसमुद्दिश्यज्वलंतीमिवतेजसा ॥ रावणःपरमक्रुद्धश्चिक्षेपचननादच ॥ ३१ ॥ साक्षिप्ताभीमवेगेनवज्राशनिसमस्वना ॥ शक्तिरभ्यपतद्वेगाल्लक्ष्मणंरणमूर्धनि ॥ ३२ ॥ तामनुव्याहरच्छक्तिमापतंतींसराघवः ॥ स्वस्त्यस्तुलक्ष्मणायेतिमोघाभवहतोद्यमा ॥ ॥ ३३ ॥ रावणेनरणेशक्तिःक्रुद्धेनाशीविषोपमा ॥ मुक्ताशूरस्यभीतस्यलक्ष्मणस्यममज्जसा ॥ ३४ ॥ न्यपतत्सामहावेगालक्ष्मणस्यमहोरसि ॥ जिह्वेवोरगराजस्यदीप्यमानामहाद्युतिः ॥ ३५ ॥ ततोरावणवेगेनसुदूरमवगाढया ॥ शक्त्याविभिन्नहृदयःपपातभुविलक्ष्मणः ॥ ३६ ॥ तदवस्थंसमीपस्थोलक्ष्मणंप्रेक्ष्यराघवः ॥ भ्रातृस्नेहान्महातेजाविषण्णहृदयोभवत् ॥ ३७ ॥ समुहूर्तमिवध्यात्वाबाष्पपर्याकुलेक्षणः ॥ बभूवसंरब्धतरोयुगांतइवपावकः ॥ ३८ ॥ नविषादस्यकालोयमितिसंचिंत्यराघवः ॥ चक्रेसुतुमुलंयुद्धंरावणस्यवधेधृतः ॥ सर्वयत्नेनमहतालक्ष्मणंपरिवीक्ष्यच ॥ ३९ ॥

॥ ३३ ॥ सामुक्ताशक्तिरभीतस्यभगवत्तत्त्वानुसंधानेननिर्भयस्यलक्ष्मणस्योरसिआशुममज्ज ॥ ३४ ॥ मुक्ताआशुउरसीतिच्छेदस्यगूढत्वात्स्पष्टमेवाहकविः ॥ न्यपतदिति ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ मुहूर्तमिवध्यात्वा ॥ किमिदानींकर्तव्यमितिपर्यालोच्येत्यर्थः ॥ संरब्धतरःयुद्धेअधिकोत्साहवान् ॥ ३८ ॥ अथविषादस्यायंनकालइतिसंचिंत्यलक्ष्मणंचसन्निरीक्ष्यमहतोत्कृष्टेनसर्वयत्नेनसहजबलास्त्रबलेनरावणस्यवधेधृतोनिश्चितोभूत्वासुतुमुलंयुद्धंचक्रे ॥ अयंचवक्ष्यमाणार्थसंक्षेपः ॥ ३९ ॥

तमेवप्रपंचयति ॥ सददर्शेति ॥ ४० ॥ तांशक्तिंलक्ष्मणगात्रादवमर्दितुमुद्धर्तुंयत्नतोनशेकुः ॥ तत्रहेतुर्बलीयसाप्रहितत्वं ॥ ४१ ॥ हेत्वंतरमप्याह ॥ अर्दिताइति ॥ रक्षसांप्रवेकेणश्रेष्ठेन ॥ किंचसाशक्तिःसौमित्रेर्देहंनिर्भिद्यधरणीतलंभुवंप्रविष्टास्पृष्टवती ॥ ४२ ॥ तांशक्तिंकराभ्यांपरामृश्यधृत्वाबलवान्बलवत्तरोरामोलक्ष्मणदेहाद्विचकर्ष ॥ विकृष्यबभंजच ॥ इयंशक्तिःसर्वदाशत्रुंनिर्भिद्यरावणसमीपमेवप्राप्नोति ॥ इदानींरामेणमोघाभवेत्युक्त्यासत्यसंकल्पेननाशितनिष्क्रमणशक्तिस्तत्रैवलग्ना ॥ साचभगवताविकृष्यभग्ना ॥४३ ॥ एतदंतरेरंध्रवि

सददर्शततोरामःशक्त्याभिन्नंमहाहवे॥ लक्ष्मणंरुधिरादिग्धंसपन्नगमिवाचलं॥ ४० ॥ तामपिप्रहितांशक्तिंरावणेनबलीयसा ॥ यत्नतस्तेहरिश्रेष्ठानशेकुरवमर्दितुं॥ ४१ ॥ अर्दिताश्चैवबाणौघैस्तेप्रवेकेणरक्षसां॥ सौमित्रेःसाविनिर्भिद्यप्रविष्टाधरणीतलं॥ ४२॥ तांकराभ्यांपरामृश्यरामःशक्तिंभयावहां॥ बभंजसमरेक्रुद्धोबलवान्विचकर्षच॥ ४३ ॥ तस्यनिष्कर्षतःशक्तिंरावणेनबलीयसा ॥ शराःसर्वेषुगात्रेषुपातितामर्मभेदिनः॥ ॥४४॥ अचिंतयित्वातान्बाणान्समाश्लिष्यचलक्ष्मणं॥ अब्रवीच्चहनूमंतंसुग्रीवंचमहाकपिं॥४५॥ लक्ष्मणंपरिवार्यैवंतिष्ठध्वंवानरोत्तमाः॥ पराक्रमस्यकालोयंसंप्राप्तोमेचिरेप्सितः॥ ४६॥ पापात्मायंदशग्रीवोवध्यतांपापनिश्चयः॥ कांक्षितंचातकस्येवघर्मांतेमेघदर्शनं ॥ ४७ ॥ अस्मिन्मुहूर्तेनचिरात्सत्यंप्रतिशृणोमिवः॥ अरावणमरामंवाजगद्द्रक्ष्यथवानराः ॥ ४८ ॥ राज्यनाशंवनेवासंदंडकेपरिधावनं ॥ वैदेह्याश्चपरामर्शंरक्षोभिश्चसमागमं॥ ४९ ॥ प्राप्तंदुःखंमहद्घोरंक्लेशश्चनिरयोपमः ॥ अद्यसर्वमहंत्यक्ष्येनिहत्वारावणंरणे॥ ५० ॥ यदर्थंवानरंसैन्यंसमानीतमिदंमया॥ सुग्रीवश्चकृतोराज्येनिहत्वावालिनंरणे॥ ५१ ॥ यदर्थंसागरःक्रांतःसेतुर्बद्धश्चसागरे॥ ५२॥

द्राक्षसःप्रजहारेत्याह ॥ तस्येति ॥ शक्तिंनिष्कर्षतस्तस्यरामस्यगात्रेष्वित्यन्वयः ॥४४ ॥ समाश्लिष्येति ॥ समाश्लेषोयंसकलपीडानिवृत्तिफलकःस्वतादात्म्यावभासनरूपः ॥ ४५ ॥ ॥ ४६ ॥ पापात्मायंवध्यतांमत्तोद्यवधंप्राप्नोतु ॥ यतोघर्मांतेचातकस्यमेघदर्शनमिववधार्थमस्यदर्शनंममचिरंकांक्षितं ॥ स्तोककस्येतिपाठेपिचातकस्येत्येवार्थः ॥ स्तोककश्चातकःसमावित्यमरात् ॥ ४७ ॥ प्रतिशृणोमिप्रतिजाने ॥ नचिरादित्यस्यशीघ्रमित्यर्थकस्यारावणमित्यादिनान्वयः ॥ ४८ ॥ ४९ ॥ राज्यनाशादिकृतंघोरंदुःखंमानसंप्राप्तं ॥ निरयोपमोयातनोपमःक्लेशःकायक्लेशश्चप्राप्तः ॥ ५० ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ दृष्टिविषस्यदर्शनमात्रेणसंहारकरमहाविषवतःसर्पस्यदृष्टिंप्राप्तोमनुष्यइवनरावणोजीवितुमर्हति ॥ ५४ ॥ ५५ ॥ रामस्यरामत्वंत्रीन्लोकान्सर्षिदेवान्धर्मेणसत्येनशौर्येणच
रमयतीत्यन्वर्थंरामत्वं ॥ तदुचितकर्माद्यकरिष्यामीतिभावः ॥ ५६ ॥ यावद्भूमिर्धरिष्यतिप्राणिनस्तावद्यन्मेकर्मसचराचराःसदेवालोकाजनाःकथयिष्यंतितादृशंकर्मकरिष्यामि ॥

सोयमद्यरणेपापश्चक्षुर्विषयमागतः॥ चक्षुर्विषयमागम्यनायंजीवितुमर्हति॥ ५३ ॥ दृष्टिंदृष्टिविषस्येवसर्पस्यममरावणः ॥ यथावावैनतेयस्यदृष्टिंप्राप्तोभुजंगमः॥ ५४॥ सुखंपश्यथदुर्धर्षायुद्धंवानरपुंगवाः॥ आसीनाःपर्वताग्रेषुममेदंरावणस्यच ॥ ५५ ॥ अद्यपश्यंतुरामस्यरामत्वंममसंयुगे॥ त्रयोलोकाःसगंधर्वाःसिद्धगंधर्वचारणाः ॥ ५६ ॥ अद्यकर्मकरिष्यामियल्लोकाःसचराचराः ॥ सदेवाःकथयिष्यंतियावद्भूमिर्धरिष्यति ॥ ॥ ५७॥ एवमुक्त्वाशितैर्बाणैस्तप्तकांचनभूषणैः ॥ आजघानरणेरामोदशग्रीवंसमाहितः॥ ५८ ॥ तथाप्रविद्धैर्नाराचैर्मुसलैश्चापिरावणः ॥ अभ्यवर्षत्तदारामंधाराभिरिवतोयदः॥ ५९॥ रामरावणमुक्तानामन्योन्यमभिनिघ्नतां ॥ वराणांचशराणांचबभूवतुमुलःस्वनः ॥ ६० ॥ विच्छिन्नाश्चविकीर्णाश्चरामरावणयोःशराः॥ अंतरिक्षात्प्रदीप्ताग्रानिपेतुर्धरणीतले ॥ ६१ ॥ तयोर्ज्यातलनिर्घोषोरामरावणयोर्महान् ॥ त्रासनःसर्वभूतानांबभूवाद्भुतदर्शनः ॥ ६२ ॥ विकीर्यमाणःशरजालवृष्टिर्महात्मनादीप्तधनुष्मतार्दितः ॥ भयात्प्रदुद्रावसमेत्यरावणोयथानिलेनाभिहतोबलाहकः॥ ६३ ॥ इत्यार्षेश्रीम० वा० युद्ध० एकाधिकशततमःसर्गः॥ १०१ ॥ ॥ ॥ ॥ ॥ शक्त्यानिपातितंदृष्ट्वारावणेनबलीयसा॥ लक्ष्मणंसमरेशूरंशोणितौघपरिप्लुतं ॥ १ ॥ सदत्वातुमुलंयुद्धंरावणस्यदुरात्मनः ॥ विसृजन्नेवबाणौघान्सुषेणमिदमब्रवीत्॥ २॥ एषरावणवीर्येणलक्ष्मणःपतितोभुवि॥ सर्पवच्चेष्टतेवीरोममशोकमुदीरयन्॥ ३ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ वराणांशराणांश्रेष्ठानांशराणां ॥ चान्मुसलानां ॥ ६० ॥ ६१ ॥ ६२॥ भयाद्भ्रातृपीडाजनितकोपेनसर्वथामांहनिष्यत्येवेत्यर्थः ॥ इदंपलायनममासायंकाले ॥ ६३ ॥ क० ॥ ९३ ॥ इतिरामाभि० वा० यु० एकाधिकशततमःसर्गः॥ १०१ ॥ ॥ ॥ ॥ ॥ शक्त्येति ॥ १ ॥ बाणौघान्विसृजन्रावणस्यतुमुलंयुद्धंदत्वातस्मिन्पलायितेलक्ष्मणपीडानिवृत्त्यर्थंसुषेणमिदमब्रवीत् ॥ २ ॥ शोकमुदीरयन्जनयन् ॥ ३ ॥

प्राणैःप्राणेभ्यः ॥ ४ ॥ ५ ॥ लज्जतीवेतिपरस्मैपदमार्षं ॥ ६ ॥ स्वमयाने ॥ स्वमेइत्यर्थेआर्षमस्यसाधुत्वं ॥ ७ ॥ भ्रातरंनिहतमित्यादिसार्धश्लोकःकविवाक्यं ॥ विष्टनंतंविकृतशब्दं

शोणितार्द्रमिमंवीरंप्राणैःप्रियतरंमम ॥ पश्यतोममकाशक्तिर्योद्धुंपर्याकुलात्मनः ॥४॥ अयंससमरश्लाघीभ्रातामेशुभलक्षणः ॥ यदिपंचत्वमा पन्नःप्राणैर्मेकिंसुखेनवा ॥ ५ ॥ लज्जतीवहिमेवीर्यंभ्रश्यतीवकराद्धनुः ॥ सायकाव्यवसीदंतिदृष्टिर्बाष्पवशंगता ॥ ६ ॥ अवसीदंतिगात्राणिस्व प्नयानेनृणामिव ॥ चिंतामेवर्ततेतीव्रामुमूर्षापिचजायते ॥ ७ ॥ भ्रातरंनिहतंदृष्ट्वारावणेनदुरात्मना ॥ विष्टनंतंतुदुःखार्तंमर्मण्यभिहतंभृशं ॥ ८ ॥ परंविषादमापन्नोविललापाकुलेंद्रियः ॥ भ्रातरंनिहतंदृष्ट्वालक्ष्मणंरणपांसुषु ॥९॥ विजयोपिहिमेशूरनप्रियायोपकल्पते ॥ अचक्षुर्विषयश्चंद्रःकां प्रीतिंजनयिष्यति ॥ १० ॥ किंमेयुद्धेनकिंप्राणैर्युद्धकार्यंनविद्यते ॥ यत्रायंनिहतःशेतेरणमूर्धनिलक्ष्मणः ॥ ११ ॥ यथैवमांवनंयांतमनुयातिम हाद्युतिः ॥ अहमप्यनुयास्यामितथैवैनंयमक्षयं ॥ १२ ॥ इष्टबंधुजनोनित्यंमांसनित्यमनुव्रतः ॥ इमामवस्थांगमितोराक्षसैःकूटयोधिभिः ॥ १३ ॥ देशेदेशेकलत्राणिदेशेदेशेचबांधवाः ॥ तंतुदेशंनपश्यामियत्रभ्रातासहोदरः ॥ १४ ॥ किंनुराज्येनदुर्धर्षलक्ष्मणेनविनामम ॥ कथंवक्ष्याम्यहंत्वं बांसुमित्रांपुत्रवत्सलां ॥ १५ ॥ उपालंभंनशक्ष्यामिसोढुंदत्तंसुमित्रया ॥ किंनुवक्ष्यामिकौसल्यांमातरंकिंनुकैकयीं ॥ १६ ॥ भरतंकिंनुवक्ष्यामि शत्रुघ्नंचमहाबलं ॥ सहतेनवनंयातोविनातेनागतःकथं ॥ १७ ॥ इहैवमरणंश्रेयोनतुबंधुविगर्हणं ॥ किंमयादुष्कृतंकर्मकृतमन्यत्रजन्मनि ॥ १८ ॥ येनमेधार्मिकोभ्रातानिहतश्चाग्रतःस्थितः ॥ हाभ्रातर्मनुजश्रेष्ठशूराणांप्रवरप्रभो ॥ १९ ॥ एकाकीकिंनुमांत्यक्त्वापरलोकायगच्छसि ॥ विलपंतं चमांभ्रातःकिमर्थंनावभाषसे ॥ २० ॥ उत्तिष्ठपश्यकिंशेषेदीनंमांपश्यचक्षुषा ॥ शोकार्तस्यप्रमत्तस्यपर्वतेषुवनेषुच ॥ २१ ॥ विषण्णस्यमहाबा होसमाश्वासयितामम ॥ राममेवंब्रुवाणंतुशोकव्याकुलितेंद्रियं ॥ २२ ॥

कुर्वंतं ॥ ८ ॥ रणपांसुषु ॥ लुठंतमितिशेषः ॥ तादृशंभ्रातरंदृष्ट्वाविजयोपिमेनप्रियायेत्यर्थः ॥ ९ ॥ १० ॥ यत्रायमिति ॥ यतःकारणादित्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ बाणैःशत्रुप्रेषितैस्तुल्यां ॥ नपंचत्वंमृतिमापन्नः ॥ श्वासाद्यनुभवात् ॥ २४ ॥ नापिमरिष्यतिलक्षणाभावादित्याह ॥ नह्यस्येति ॥ २५ ॥ पद्मपत्रतलौपद्मपत्रवद्रक्तवर्णकर
तलवंतौ ॥ २६ ॥ भूतलेप्रसुप्तस्यस्रस्तगात्रस्येवमुहुर्मुहुःकंपमानस्यहृदयममुंसोच्छ्वासमाख्याति ॥ २७ ॥ २८ ॥ २९ ॥ योसौजांबवतातेकथितस्तमोषधिपर्वतंगत्वातस्यदक्षिणशि
खरेजातामोषधीमानय ॥ ३० ॥ सावर्ण्यकरणींपूर्ववर्णसमानवर्णकरणीं ॥ ३१ ॥ अजानंस्तामहौषधीरिति ॥ पूर्वदृष्टानामप्यपरिचयेपुराणांतरोक्तकालनेमियुद्धकृतचित्तचांचल्यं

आश्वासयन्नुवाचेदंसुषेणःपरमंवचः ॥ त्यजेमांनरशार्दूलबुद्धिंवैक्लव्यकारिणीं ॥ २३ ॥ शोकसंजननींचिंतांतुल्यांबाणैश्चमूमुखे ॥ नैवपंचत्व
मापन्नोलक्ष्मणोलक्ष्मिवर्धनः ॥ २४ ॥ नह्यस्यविकृतंवक्त्रंनचश्यामत्वमागतं ॥ सुप्रभंचप्रसन्नंचमुखमस्यनिरीक्ष्यतां ॥ २५ ॥ पद्मपत्रतलौहस्तौसु
प्रसन्नेचलोचने ॥ नेदृशंदृश्यतेरूपंगतासूनांविशांपते ॥ २६ ॥ विषादंमाकृथावीरसप्राणोयमरिंदम ॥ आख्यातितुप्रसुप्तस्यस्रस्तगात्रस्यभूतले ॥
॥ २७ ॥ सोच्छ्वासंहृदयंवीरकंपमानंमुहुर्मुहुः ॥ एवमुक्त्वामहाप्राज्ञःसुषेणोराघवंवचः ॥ २८ ॥ समीपस्थमुवाचेदंहनूमंतंमहाकपिं ॥ सौम्यशी
घ्रमितोगत्वापर्वतंहिमहोदयं ॥ २९ ॥ पूर्वंतुकथितोयोसौवीरजांबवतातव ॥ दक्षिणेशिखरेजातांमहौषधिमिहानय ॥ ३० ॥ विशल्यकरणींना
म्नासावर्ण्यकरणींतथा ॥ संजीवकरणींवीरसंधानींचमहौषधीं ॥ ३१ ॥ संजीवनार्थंवीरस्यलक्ष्मणस्यत्वमानय ॥ इत्येवमुक्तोहनुमान्गत्वाचौष
धिपर्वतं ॥ चिंतामभ्यगमच्छ्रीमानजानंस्तामहौषधीः ॥ ३२ ॥ तस्यबुद्धिःसमुत्पन्नामारुतेरमितौजसः ॥ इदमेवगमिष्यामिगृहीत्वाशिखरंगि
रेः ॥ ३३ ॥ अस्मिंस्तुशिखरेजातामोषधींतांसुखावहां ॥ प्रतर्केणावगच्छामिसुषेणोप्येवमब्रवीत् ॥ ३४ ॥ अगृह्ययदिगच्छामिविशल्यकरणी
महं ॥ कालात्ययेनदोषःस्याद्वैक्लव्यंचमहद्भवेत् ॥ ३५ ॥

हेतुरितिबोध्यं ॥ ३२ ॥ ३३ ॥ अस्मिंस्तुशिखरेइति ॥ अस्मिन्नेवशिखरेजातांतामोषधींप्रतर्केणावगच्छामि ॥ हियतःसुषेणएवमेवंलक्षणशिखरेतामब्रवीत् ॥ ३४ ॥ अगृह्येति ॥ अ
त्रशिखरेऽस्तीत्येतावन्मात्रमेवजानामिइयंविशल्यकरणीतिविशिष्यनजानामि ॥ अनुभवाभावात् ॥ अतस्तांविशल्यकरणींलक्ष्मणस्यसप्राणत्वादवश्यमपेक्षितांयद्यगृहीत्वाअन्यांवा
तदाभासांगृहीत्वागच्छामितदामहद्वैक्लव्यंअचतुराज्ञत्वादिदोषःस्यात् ॥ विचारकरणेतुकालात्ययेनलक्ष्मणस्यप्राणनाशोदोषःस्यात् ॥ ३५ ॥

इत्येवमादिकंसंचिंत्यत्रिःप्रकंप्य ॥ स्वेनपुरास्थापितस्यापिपुनरुत्पाटनार्थंत्रिःकंपनं ॥ पूर्वंसंगृहीतौषधीनांमूर्च्छितयूथपेषुव्ययात्पुनरस्यप्रेषणमितिबोध्यं ॥ ३६ ॥ ३७ ॥ गिरेःशि
खरंगृहीत्वास्थलान्नभउत्पपात ॥ ३८ ॥ संन्यस्यसुषेणसमीपइतिशेषः ॥३९॥४०॥४१॥४२॥ संक्षोदयित्वा ॥ संमर्द्येत्यर्थः॥ ४३ ॥४४॥४५॥ एह्येहीति॥उत्थितंलक्ष्मणंरामएह्येही

इतिसंचिंत्यहनुमान्गत्वाक्षिप्रंमहाबलः ॥ आसाद्यपर्वतश्रेष्ठंत्रिःप्रकंप्यगिरेस्तटं ॥ ३६ ॥ फुल्लनानातरुगणंसमुत्पाट्यमहाबलः ॥ गृहीत्वाहरि
शार्दूलोहस्ताभ्यांसमतोलयत्॥ ३७॥ सनीलमिवजीमूतंतोयपूर्णंनभस्तलात्॥ उत्पपातगृहीत्वातुहनूमान्शिखरंगिरेः॥ ३८ ॥ समागम्यमहावे
गःसंन्यस्यशिखरंगिरेः ॥ विश्रम्यकिंचिद्धनुमान्सुषेणमिदमब्रवीत् ॥ ३९ ॥ ओषधीर्नावगच्छामिताअहंहरिपुंगव ॥ तदिदंशिखरंकृत्स्नंगिरेस्त
स्याहृतंमया ॥ ४० ॥ एवंकथयमानंतुप्रशस्यपवनात्मजं ॥ सुषेणोवानरश्रेष्ठोजग्राहोत्पाट्यचौषधीः ॥ ४१ ॥ विस्मितास्तुबभूवुस्तेसर्वेवानरपुंग
वाः ॥ दृष्ट्वातुहनुमत्कर्मसुरैरपिसुदुष्करं ॥ ४२ ॥ ततःसंक्षोदयित्वातामोषधींवानरोत्तमः ॥ लक्ष्मणस्यददौनस्तःसुषेणःसुमहाद्युतिः ॥ ४३ ॥ स
शल्यःससमाघ्रायलक्ष्मणःपरवीरहा ॥ विशल्योविरुजःशीघ्रमुदतिष्ठन्महीतलात् ॥ ४४ ॥ तमुत्थितंतुहरयोभूतलात्प्रेक्ष्यलक्ष्मणं ॥ साधुसाध्वितिसु
प्रीतालक्ष्मणंप्रत्यपूजयन् ॥ ४५ ॥ एह्येहीत्यब्रवीद्रामोलक्ष्मणंपरवीरहा ॥ सस्वजेगाढमालिंग्यबाष्पपर्याकुलेक्षणः ॥ ४६ ॥ अब्रवीच्चपरिष्वज्यसौ
मित्रिंराघवस्तदा ॥ दिष्ट्यात्वांवीरपश्यामिमरणात्पुनरागतं ॥ ४७ ॥ नहिमेजीवितेनार्थःसीतयाचजयेनवा ॥ कोहिमेजीवितेनार्थस्त्वयिपंचत्व
मागते ॥ ४८ ॥ इत्येवंब्रुवतस्तस्यराघवस्यमहात्मनः ॥ खिन्नःशिथिलयावाचालक्ष्मणोवाक्यमब्रवीत् ॥ ४९ ॥ तांप्रतिज्ञांप्रतिज्ञायपुरासत्यपरा
क्रम ॥ लघुःकश्चिदिवासत्वोनैवंत्वंवक्तुमर्हसि ॥ ५० ॥ नहिप्रतिज्ञांकुर्वंतिवितथांसत्यवादिनः ॥ लक्षणंहिमहत्त्वस्यप्रतिज्ञापरिपालनं ॥ ५१ ॥ नै
राश्यमुपगंतुंचनालंतेमत्कृतेनघ ॥ वधेनरावणस्याद्यप्रतिज्ञामनुपालय ॥ ५२ ॥

त्यब्रवीत् ॥ ४६॥४७॥ ४८ ॥ शिथिलयावाचाखिन्नः ॥ कोहिमेजीवितेनार्थइत्येवंरूपयारावणवधविभीषणराज्यदानप्रतिज्ञाशैथिल्यकरयावाचाखिन्नइत्यर्थः ॥ ४९ ॥ तदेवाह ॥
तामिति ॥ तांमदुक्तरूपां ॥५०॥५१ ॥ मत्कृतेनैराश्यमुपगंतुंनालंनयुक्तं ॥ दैवाद्विपत्तावपीतिशेषः ॥ प्रतिज्ञामनुपालयदैवगत्याममापिस्वस्थतयास्वस्थचित्तःसन्प्रतिज्ञांपालय ॥५२॥

॥ ५३ ॥ कृतकर्माअद्यतनकर्तव्यांशेकृतलोकानुग्रहः ॥ यावदस्तंनयातीत्यनेनाश्विनशुक्लप्रतिपद्येषावार्तेतिगम्यते ॥ ५४ ॥ ५५ ॥ कतक० ॥ ९४ ॥ इतिरामाभि०वा०युद्ध० द्व्यधिकशततमःसर्गः ॥ १०२ ॥ ॥ ७ ॥ ॥ ७ ॥ लक्ष्मणेनेति ॥ १ ॥ रावणायशरान्विससर्ज ॥ अथान्यंरथमित्यनेनचात्रस्थानेरावणेनशुक्राज्ञयाजयनिमित्तंनि

नजीवन्यास्यतेशत्रुस्तवबाणवशंगतः ॥ नर्दतस्तीक्ष्णदंष्ट्रस्यसिंहस्येवमहागजः ॥ ५३ ॥ अहंतुवधमिच्छामिशीघ्रमस्यदुरात्मनः ॥ यावदस्तंनयात्येषकृतकर्मादिवाकरः ॥ ५४ ॥ यदिवधमिच्छसिरावणस्यसंख्येयदिचकृतांहितवेच्छसिप्रतिज्ञां ॥ यदितवराजसुताभिलाषआर्यकुरुचववचोममशीघ्रमघवीर ॥ ५५ ॥ इत्यार्षेश्रीमद्रामा०वाल्मी०युद्ध०द्व्यधिकशततमःसर्गः ॥ १०२ ॥ ॥ ७ ॥ ॥ ७ ॥ लक्ष्मणेनतुतद्वाक्यमुक्तंश्रुत्वासराघवः ॥ संदधेपरवीरघ्नोधनुरादायवीर्यवान् ॥ १ ॥ रावणायशरान्घोरान्विससर्जचमूमुखे ॥ अथान्यंरथमास्थायरावणोराक्षसाधिपः ॥ २ ॥ अभ्यधावतकाकुत्स्थंस्वर्भानुरिवभास्करं ॥ दशग्रीवोरथस्थस्तुरामंवज्रोपमैःशरैः ॥ आजघानमहाशैलंधाराभिरिवतोयदः ॥ ३ ॥ दीप्तपावकसंकाशैःशरैःकांचनभूषणैः ॥ अभ्यवर्षद्रणेरामोदशग्रीवंसमाहितः ॥ ४ ॥ भूमौस्थितस्यरामस्यरथस्थस्यचरक्षसः ॥ नसमंयुद्धमित्याहुर्देवगंधर्वकिन्नराः ॥ ५ ॥ ततोदेववरःश्रीमान्श्रुत्वातेषांवचोमृतं ॥ आहूयमातलिंशक्रोवचनंचेदमब्रवीत् ॥ ६ ॥ रथेनममभूमिष्ठंशीघ्रंयाहिरघूत्तमं ॥ आहूयभूतलंयातःकुरुदेवहितंमहत् ॥ ७ ॥ इत्युक्तोदेवराजेनमातलिर्देवसारथिः ॥ प्रणम्यशिरसादेवंततोवचनमब्रवीत् ॥ ८ ॥ शीघ्रंयास्यामिदेवेंद्रसारथ्यंचकरोम्यहं ॥ ततोहयैश्चसंयोज्यहरितैःस्यंदनोत्तमं ॥ ततःकांचनचित्रांगःकिंकिणीशतभूषितः ॥ ९ ॥ तरुणादित्यसंकाशोवैदूर्यमयकूबरः ॥ सदश्वैःकांचनापीडैर्युक्तःश्वेतप्रकीर्णकैः ॥ १० ॥

कुंभिलायामारब्धहोमकर्मणोवानरद्वाराहिंसनंपुराणांतरोक्तमनुसंधेयमितिसूचितं ॥ पूर्वंरणात्पलायनोक्त्यारावणोद्देश्यकशरविसर्गस्यरणभूमावसंभवात् ॥ आश्विनप्रतिपन्मध्याह्नेएतद्युद्धप्रवृत्तिः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ममरथेनशीघ्रंरघूत्तमंयाहि ॥ भूतलंयातःप्राप्तश्चआहूयरघूत्तमंसंबोधनपूर्वंदेवराजरथोयमितिबोधयित्वामहद्देवहितंकुर्वित्यर्थः ॥ ७ ॥ ॥ ८ ॥ ९ ॥ कांचनापीडैःस्वर्णाभरणैः ॥ श्वेतप्रकीर्णकैःसितचामराद्यलंकारवद्भिः ॥ चामरंतुप्रकीर्णकमित्यमरः ॥ १० ॥

देवराजरथायोस्तीतिशेषः ॥ तमारुह्येत्युत्तरेणसंबंधः ॥ ११ ॥ देवराजेनसंदिष्टःशीघ्रंगच्छेत्याज्ञप्तोमातलिरित्यन्वयः ॥ पूर्वाज्ञयावस्तुसज्जीकरणंपुनराज्ञयामनुष्यलोकंप्रतिचलनमि

हरिभिःसूर्यसंकाशैर्हेमजालविभूषितैः॥ रुक्मवेणुध्वजःश्रीमान्देवराजरथोवरः ॥ ११ ॥ देवराजेनसंदिष्टोरथमारुह्यमातलिः ॥ अभ्यवर्ततका कुत्स्थमवतीर्यत्रिविष्टपात् ॥ १२ ॥ अब्रवीच्चतदारामंसप्रतोदोरथेस्थितः ॥ प्रांजलिर्मातलिर्वाक्यंसहस्राक्षस्यसारथिः ॥ १३ ॥ सहस्राक्षेणका कुत्स्थरथोयंविजयायते ॥ दत्तस्तवमहासत्त्वश्रीमन्शत्रुनिबर्हण ॥ १४ ॥ इदमैंद्रंमहच्चापंकवचंचाग्निसन्निभं ॥ शराश्चादित्यसंकाशाःशक्तिश्च विमलाशिवा ॥ १५ ॥ आरुह्येमंरथंवीरराक्षसंजहिरावणं ॥ मयासारथिनादेवमहेंद्रइवदानवान् ॥ १६ ॥ इत्युक्तःसंपरिक्रम्यरथंतमभिवाद्यच॥ आरुरोहतदारामोलोकान्लक्ष्म्याविराजयन् ॥ १७ ॥ तद्बभौचाद्भुतंयुद्धंद्वैरथंरोमहर्षणं ॥ रामस्यचमहाबाहोरावणस्यचरक्षसः ॥ १८ ॥ सगां धर्वेणगांधर्वंदैवंदैवेनराघवः ॥ अस्त्रंराक्षसराजस्यजघानपरमास्त्रवित् ॥ १९ ॥ अस्त्रंतुपरमंघोरंराक्षसंराक्षसाधिपः ॥ ससर्जपरमक्रुद्धःपुन रेवनिशाचरः॥ २० ॥ तेरावणधनुर्मुक्ताःशराःकांचनभूषणाः ॥ अभ्यवर्ततकाकुत्स्थंसर्पाभूत्वामहाविषाः ॥ २१ ॥ तेदीप्तवदनादीप्तंवमंतोज्व लनंमुखैः ॥ राममेवाभ्यवर्ततव्यादितास्याभयानकाः ॥ २२ ॥ तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः ॥ दिशश्चसंतताःसर्वाविदिशश्चसमावृ ताः ॥ २३ ॥ तान्दृष्ट्वापन्नगान्रामःसमापततआहवे ॥ अस्त्रंगारुत्मतंघोरंप्रादुश्चक्रेभयावहं ॥ २४ ॥ तेराघवधनुर्मुक्तारुक्मपुंखाःशिखिप्रभाः ॥ सुवर्णाःकांचनाभूत्वाविचेरुःसर्पशत्रवः ॥ २५ ॥ तेतान्सर्वान्शरान्जघ्नुःसर्परूपान्महाजवान् ॥ सुपर्णरूपारामस्यविशिखाःकामरूपिणः ॥ २६ ॥ अस्त्रेप्रतिहतेक्रुद्धोरावणोराक्षसाधिपः ॥ अभ्यवर्षत्तदारामंघोराभिःशरवृष्टिभिः ॥ २७ ॥ ततःशरसहस्रेणराममक्लिष्टकारिणं ॥ अर्दयित्वाशरौ घेणमातलिंप्रत्यविध्यत ॥ २८ ॥

तिबोध्यं ॥ १२ ॥ १३ ॥ १४ ॥ इदंदत्तमित्यनुषज्यते ॥ १५ ॥ १६ ॥ संपरिक्रम्यप्रदक्षिणीकृत्य ॥ १७ ॥ द्वैरथंद्वौरथौययोस्तौद्विरथौतयोरिदंद्वैरथं ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ व्यादितास्याव्यात्तवदनाः ॥ २२ ॥ २३ ॥ प्रादुश्चक्रेप्रयुयुजे ॥ २४ ॥ शिखिप्रभाअग्निप्रभाः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

केतुमुद्दिश्यप्रक्षिप्तेनैकेनशरेणकेतुंचिच्छेद ॥ छिन्नंचतंरथाद्रथोर्ध्वदेशाद्रथोपस्थेपातयित्वा ॥ २९ ॥ अश्वानपिजघान ॥ ३० ॥ ३१ ॥ अथरामभयावहानुत्पातानाह ॥ प्राजापत्यमिति ॥ प्रजापतिदैवत्यनक्षत्रभूतांरोहिणीमित्यर्थः ॥ ३२ ॥ ३३ ॥ दिवाकरंस्पृशन्निवोत्पपात ॥ अत्युच्चोर्मिर्जातइत्यर्थः ॥ शस्त्रवर्णःकृष्णांतर्मंडलः ॥ ३४ ॥ कबंधांकःकबंधोंकेय



चिच्छेदकेतुमुद्दिश्यशरेणैकेनरावणः ॥ पातयित्वारथोपस्थेरथात्केतुंचकांचनं ॥ २९ ॥ ऐंद्रानपिजघानाश्वान्शरजालेनरावणः ॥ विषेदुर्देवगंधर्वचारणादानवैःसह ॥ ३० ॥ राममार्तंतदादृष्ट्वासिद्धाश्चपरमर्षयः ॥ व्यथितावानरेंद्राश्चबभूवुःसविभीषणाः ॥ ३१ ॥ रामचंद्रमसंदृष्ट्वाग्रस्तंरावणराहुणा ॥ प्राजापत्यंचनक्षत्रंरोहिणींशशिनःप्रियां ॥ ३२ ॥ समाक्रम्यबुधस्तस्थौप्रजानामहितावहः ॥ सधूमपरिवृत्तोर्मिःप्रज्वलन्निवसागरः ॥ ३३ ॥ उत्पपाततदाक्रुद्धःस्पृशन्निवदिवाकरं ॥ शस्त्रवर्णःसुपरुषोमंदरश्मिर्दिवाकरः ॥ ३४ ॥ अदृश्यतकबंधांकःसंसक्तोधूमकेतुना ॥ कोशलानांचनक्षत्रंव्यक्तमिंद्राग्निदैवतं ॥ ३५ ॥ आहत्यांगारकस्तस्थौविशाखमपिचांबरे ॥ दशास्योविंशतिभुजःप्रगृहीतशरासनः ॥ ३६ ॥ अदृश्यतदशग्रीवोमैनाकइवपर्वतः ॥ निरस्यमानोरामस्तुदशग्रीवेणरक्षसा ॥ ३७ ॥ नाशक्नोदभिसंधातुंसायकान्रणमूर्धनि ॥ सकृत्वाभ्रुकुटिंक्रुद्धःकिंचित्संरक्तलोचनः ॥ ३८ ॥ जगामसुमहाक्रोधंनिर्दहन्निवराक्षसान् ॥ तस्यक्रुद्धस्यवदनंदृष्ट्वारामस्यधीमतः ॥ सर्वभूतानिवित्रेसुःप्राकंपतचमेदिनी ॥ ३९ ॥ सिंहशार्दूलवाञ्छैलःसंचचालचलद्रुमः ॥ बभूवचापिक्षुभितःसमुद्रःसरितांपतिः ॥ ४० ॥ खराश्चखरनिर्घोषागगनेपरुषाघनाः ॥ औत्पातिकाश्चनर्दंतःसमंतात्परिचक्रमुः ॥ ४१ ॥ रामंदृष्ट्वासुसंक्रुद्धमुत्पातांश्चैवदारुणान् ॥ वित्रेसुःसर्वभूतानिरावणस्याभवद्भयं ॥ ४२ ॥ विमानस्थास्तदादेवागंधर्वाश्चमहोरगाः ॥ ऋषिदानवदैत्याश्चगरुत्मंतश्चखेचराः ॥ ४३ ॥

स्यसः ॥ ३५ ॥ विशाखंविशाखाख्यनक्षत्रं ॥ एतेउत्पातारामस्यतथामनुष्यधर्मनटनसूचकाइतिबोध्यं ॥ ३६ ॥ ३७ ॥ ३८ ॥ क्रुद्धःसरामःसुमहाक्रोधंजगाम ॥ तादृशक्रोधप्राप्तौस्वजनार्तिर्भूतवैपरीत्यंरावणपराक्रमश्चनिमित्तं ॥ ३९ ॥ चलद्रुमइतिबहुव्रीहिः ॥ महद्रुमइतिपाठांतरं ॥ ४० ॥ औत्पातिकाःउत्पातप्रवृत्ताः ॥ ४१ ॥ ४२ ॥ ४३ ॥

